॥ श्रीः ॥

॥ श्रीमते हयग्रीवाय नमः ॥

# ॥ तर्कपद्यरत्नावली ॥

## प्रत्यक्षखण्डः ॥

नवजलधरवररुचिरं तटिदाभोदारदारसंश्लिष्टम् ।
श्रीरामनाम भव्यं महामहो मे ददातु भव्यानि ॥ १

गुरुकरुणारसपूर्णास्वादितसत्तर्कसाररसभृङ्गा ।
वाजाप्याङ्कितसुंदरनाम्ना रत्नावलिर्मुदा क्रियते ॥ २ ॥

सा चेत्पुरैव वाक्यावलिरूपा पुस्तके सदालोक्या ।
सैवाद्य पद्यरूपा हृद्या वाचो विधेयतामयते ॥ ३ ॥

[illegible]
ग्रन्थनिबन्धनयोग्यं त्ववधानं हि प्रतिज्ञया कार्यम् ॥ ५

ननु मङ्गळं समाप्तौ विघ्नध्वंसेऽपि वा न हेतुः स्यात् ।
नास्तिकमङ्गळशून्यग्रन्थादौ दर्शनात्समाप्तेश्च ॥ ६ ॥

किरणवळौ समाप्तेरदर्शनान्मङ्गळस्य सत्त्वेऽपि ।
व्यतिरेकान्वयरूपव्यभिचारयुगस्य दर्शनाद्धेतोः ॥ ७ ॥

इति चेन्न नास्तिकस्य ग्रन्थाद्बहिरेव मङ्गळाचरणात् ।
किरणावळौ च विघ्ना बहवः सन्तीति चासमाप्ता सा ॥

प्रचुरं हि मङ्गळं स्याद्बलवत्तरविघ्ननाशने शक्तम् ।
इत्थं चाव्यभिचाराद्भवति समाप्तौ तु मङ्गळं जनकम् ॥

ननु बुद्ध्यादिममङ्गलमात्मादिषु वर्तते न तु समाप्तिः ।
ग्रन्थान्त्यवर्णनाशः समाप्तिरेवाभवद्गगन एव ॥ १० ॥

अनयोर्व्यधिकरणत्वाद्द्वयोः कथं कार्यकारणत्वं स्यात् ।
इति चेन्न प्रतियोगी चरमो वर्णो भवेत्समाप्तेर्यः ॥ ११

एवं चजन्मान्तरसमाप्तिमुद्दिश्य मङ्गलं पुरुषः ।
एतज्जन्मनि कुर्यादिति यद्यपि जायते पुनः शङ्का ॥ १३

तदपि स्वप्रतियोगी यदवच्छिन्नो भवेच्चरमवर्णः ।
तस्मिन्वृद्धशरीरे मङ्गळमास्ते कृतं युवशरीरे ॥ १४ ॥

स्वोत्पादावच्छेदकजातीयतायोगतस्त्विति हृता स्यात् ।
जन्मान्तरे समाप्तिर्यत्र शरीरे तु जायते तत्र ॥ १५ ॥

एतन्मङ्गळजननावच्छेदकगात्रजातिरपि नेति ।
जन्मान्तरे समाप्तिं प्रति मङ्गलमद्य जन्मनि न कार्यम् ॥

विघ्नेशस्तवपाठाद्विघ्नविनाशो भवेत्समाप्तिश्च ।
इति तत्र मङ्गलस्य व्यभिचाराद्धेतुता द्वयोरेव ॥ १७ ॥

स्वीकार्यो व्यभिचारः परस्परं वारणीय एव स्यात् ।
सामानाधिकरण्यस्वोत्तरजातत्वयोगयुगळेन ॥ १८ ॥

स्वविशिष्टविघ्ननाशे स्वस्य च हेतुत्वमेव वक्तव्यम् ।

अपि तु समाप्तिर्भवतीत्याहुः प्रतिभादिकारणकलापात् ।
ननु यदि विघ्नविनाशो मङ्गळकार्यं तदा कथं तत्र ॥ २१

नास्त्येव यत्र विघ्नस्तत्र कृतं मङ्गळं कथं सफलम् ।
निष्फलमिति चेन्न स्यात्तत्रेष्टापत्तिरुत्तरं सम्यक् ॥ २२ ॥

नास्त्येव यत्र पापं तत्र कृता निष्कृतिर्भ्रमेणैव ।
तदपि न बोधकवेदस्याप्रामाण्यं कदापि कस्यापि ॥ २३

सति पापे तन्नाशः श्रुतिचोदित एव नान्यथा प्रभवेत् ।
इष्टापत्तिश्चेदपि तत्र व्यभिचारवारणं कार्यम् ॥ २४ ॥

नास्त्येव यत्र पापं तन्नानाशस्तु कारणाभावात् ।
नाशं प्रति जनकः स्यात्प्रतियोगीति व्यवस्थयैवालम् ॥

यावत्कारणसत्त्वे व्यभिचारः कार्यदर्शनाभावे ।
प्रतियोगिनोऽपि यावद्घटकस्यासत्त्वतो न दोष इति ॥ २

स्वत एव यत्र सिद्धो विघ्नस्यात्यन्तपूर्वकोऽभावः ।
तत्र च विघ्नात्यन्ताभावो नाशो भवेन्न विघ्नस्य ॥ २७ ॥

प्रतिबन्धकसंसर्गाभावत्वेनैव कार्यहेतुत्वात् ।
द्रव्यगुणकर्मरूपाः सामान्यविशेषनित्यसंबन्धाः ॥ २९

एवमभावश्चेति प्रथिताः सप्तैव ते पदार्थाः स्युः ।

इति मङ्गळवादः ॥

---

## शक्तिवादः ॥

ननु शक्तेरतिरिक्तत्वेन कथं सप्त ते पदार्थाः स्युः ॥ ३०

इन्धनदीप्तेन पुनर्मण्यादियुतेन वह्निना दाहः ।
न हि जन्यते तदानीम् वह्नौ दाहानुकूलशक्तिर्या ॥ ३१

मणिना विनाश्यते सा पुनरपि जायेत मण्यपाये वा ।
उत्तेजके च सति वा सेति भृशं शक्तिकल्पनं न्याय्यम् ।

इति चेन्न कारणत्वं वह्न्यादेर्मण्यभावयुक्तस्य ।
[illegible]

न च मणिसत्त्वदशायां जायत उत्तजके सति च दाहः ।
कथमिति नैव च वाच्यं प्रतिबन्धकता पुनस्तदा दाहे ॥

उत्तेजकरहितमणेः स्यात्ताहङ्मण्यभावहेतुत्वात् ।

## इति शक्तिवादः ॥

---

## सादृश्यवादः ॥

सदृशं चन्द्रेण मुखं त्विति बुद्धया तत्र तत्र सादृश्यम् ॥

अस्ति किलाष्टममेतत्सप्तैव च ते कथं पदार्थाः स्युः ।
सामान्येऽपि च सत्त्वात्षड्भावान्तर्गतं न हि स्यात्तत् ॥

सदिति प्रतीयमानं तदभावादन्यदेव कथनीयम् ।
इति यत्तदप्ययुक्तं सादृश्यं त्वेतदेव विख्यातम् ॥ ३८ ॥

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति नान्यत् ॥
तद्गतभूयोधर्मा द्रव्यगुणाः कर्मजातिरूपास्ते ॥ ३९ ॥

तत्सम्भव पदार्था इति सिद्ध नाधिक यतः किंचित् ।

## इति सादृश्यवादः ॥

इति शक्तिसादृश्ययोरतिरिक्तत्वखण्डनम् ॥

---

क्षित्यप्तेजोवाय्वाकाशाः कालो दिगात्मचेतांसि ॥ ४१ ॥
द्रव्याणीमानि नवैवेत्युक्तं तत्र तत्र शास्त्रेषु ।

## तमसो द्रव्यत्वखण्डनम् ॥

नीलं तमो हि चलतीत्यबाधितप्रत्ययात्तमो द्रव्यम् ॥

दशमं जगत्प्रसिद्धम् द्रव्याणि नवैव हीति कथमेतत् ।
रूपक्रियादिमत्त्वादिदं तमो द्रव्यतामुपैत्येव ॥ ४३ ॥

पृथ्व्यादिवायुभिन्नं स्पर्शविहीनत्वरूपहेतोस्तत् ।
गगनादिपञ्चकं यत्तद्भिन्नं रूपवत्त्वहेतोश्च ॥ ४४ ॥

क्लृप्तनवद्रव्यबहिर्भूतत्वाद्द्रव्यभावतोऽप्यधिकम् ।
इति चेन्न तेजसः सादृश्यकार्यं तमो हि न तत्सम् ॥

सर्वानुभूतिसिद्धस्योष्णस्पर्शस्य चाश्रयालाभात् ।
आवश्यकं हि तेजस्तमस्तथा शक्यते न मन्तुमपि ॥

तेजोऽभावविकारस्तम इति चोक्त्या समञ्जसं सर्वम् ।

इति तमसो द्रव्यत्वखण्डनम् ॥

---

## द्रव्यत्वजातिनिरूपणम् ॥

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं द्रव्यलक्षणं भवति ॥ ४९

द्रव्यत्वजातिसिद्धौ प्रत्यक्षं न प्रमाणयितुमर्हम् ।
द्रव्यत्वस्यातीन्द्रियपरमाण्वादौ च विद्यमानत्वात् ॥ ५०

किंत्वनुमानं मानं संयोगविभागकार्यता या स्यात् ।
समवायावच्छिन्ना या च भवेत्तन्निरूपिता यैव ॥ ५१

हेतुमदेकभाव कारणतयाति चानुमानेन ।
लाघवधीसहकाराद्द्रव्यत्वं जातिरेव सिद्धं स्यात् ॥ ५

इति द्रव्यत्वजातिनिरूपणम् ॥

रूपं रसश्च गन्धः स्पर्शः संख्या तथैव परिमाणम् ।
एवं पृथक्त्वमेकम संयोगविभागपूर्वकपरत्वम् ॥ ५४. ॥

अपरत्वं च गुरुत्वं स्नेहः शब्दस्तथैव बुद्धिश्च ।
सुखमपि च दुःखमिच्छा द्वेषो यत्नस्तथैव धर्मश्च ॥ ५

एवमधर्मश्च तथा संस्कारान्ता इमे गुणा नान्यत् ।
द्रव्यान्यः कर्मान्यः सामान्यस्याश्रयो भवेत्स गुणः ॥ ५

उत्क्षेपणं तथापक्षेपणमाकुञ्चनं प्रसारश्च ।
गमनं च पञ्चकर्माण्यपि सामान्यं द्विधैव परमपरम् ॥

द्रव्यादित्रिकवृत्तिः सत्तैव परं तदन्यदपरं स्यात् ।
द्रव्यत्वादिकजातिः परापरं स्यादिति प्रभेदोऽस्य ॥ ५

[illegible]
द्रव्ये घटादिरूपे द्व्यणुकावधिके तु तत्तदङ्गानि ॥ ६०

व्यावर्तकानि च स्युः परमाणुषु भेदको विशेषः स्यात् ।
व्यावर्तकं न तस्य स्यादनवस्थाभयेन किंचिदपि ॥ ६१

ननु परमाणुषु तत्तत्परमाणुत्वं न भेदकं कस्मात् ।
व्यर्था विशेषकास्मिन्त्विति चेन्न न भेदकत्वमेवास्य ॥ ६२

अन्यावृत्तनयैव व्यावृत्तेर्हेतुना न संभवति ।
धर्मिग्राहकमानाद्विशेष एवंदृशो भवेत्सिद्धः ॥ ६३ ॥

तस्माद्विशेषसिद्धिर्नित्यद्रव्येषु निर्व्यूढा ।
नित्यो यः संबन्धः स एष समवाय एकः स्यात् ॥ ६४

अङ्गाङ्गिनौ यथा द्वौ गुणगुणिनौ च क्रियाक्रियावन्तौ ।
नित्यद्रव्यविशेषौ जातिव्यक्ती च तेषु समवायः ॥ ६५ ।

गुणवानयं क्रियावानित्यादिविशिष्टबुद्धिसिद्धः स्यात् ।
अवगाहते विशेषणविशेष्ययोर्योगमेकमेषा धीः ॥ ६६ ॥

न च सिद्धसाधनं स्यादर्थान्तरं वा स्वरूपसंबन्धात् ।
आनन्त्यवत्स्वरूपेष्वपि संबन्धत्वकल्पनानुचिता ॥ ६८ ॥

गौरवतो लाघवतस्त्वेकः समवाय एव सिद्ध इति ।
न च समवायस्यैक्ये वायावपि रूपवत्त्वबुद्धिः स्यात् ॥

स्पर्शसमवायसत्त्वात्स एव रूपस्य चैव समवायः ।
संबन्धसत्त्वमेव स्फुटयति संबन्धिसत्त्वमिति वाच्यम् ॥

रूपनिरूपितता या तया विशिष्टो भवेच्च समवायः ।
तत्सत्त्वमेव सत्त्वं रूपस्य तनोति नोक्तबुद्धिरिति ॥ ७१

नास्तीति बुद्धिसिद्धो भावादन्यश्चतुर्विधोऽभावः ।
स प्रागभाव एकः प्रध्वंसाभाव एतदन्यः स्यात् ॥ ७२

अत्यन्तान्योन्यपदे यत्पूर्वे तादृशावभावौ द्वौ ।
यः स्याद्विनाश्यभावः स एव च प्रागभाव इति सिद्धम्

यो जायतेऽप्यभावः स ध्वंसाभाव एव भवतीति ।

स्याद्वाभावत्वे त्वत्यन्ताभावलक्षणं घटकम् ।
तादात्म्यपूर्वको यः संबन्धस्तेन याऽप्यवच्छिन्ना ॥ ७९ ॥

प्रतियोगिता तु तस्या निरूपकोऽन्योन्यपूर्वकोऽभावः ।
अत्यन्ताभावस्य च नित्यत्वे भूतले घटोऽस्ति यदा ॥

तदभाववत्त्वबुद्धिस्तदा कुतो नास्त्यभावसत्त्वाच्च ।
इति चेन्न भूतलादिः स्वरूपसंबन्धतां स एव भजेत् ॥

घटशून्यकालवृत्त्या यश्च विशिष्टस्तदा तु तदसत्त्वात् ।
उत्पादनाशशाली भवेच्चतुर्थोऽप्यभाव इति केचित् ॥

यत्र विनाशश्च भवेत्स्यात्प्रागभावोऽपि तत्र नाभावः ।
अत्यन्तपूर्वकः स्यादिति हि प्राचीनसिद्धमतमेतत् ॥ ८० ॥

श्यामे घटे न रक्तो रक्ते श्यामोऽपि नेति बुद्धिर्या ।
सा प्रागभावमेवं ध्वंसं वा गाहते न चाभावम् ॥ ८१ ॥

अत्यन्तपूर्वकं तं तयोर्विरोधाच्च तेन ममभेव ।
नव्यास्तु तद्विरोधे मानाभावात्तदाश्रयेऽभावः ॥ ८२ ॥

मध्यमरक्तदशायां ध्वंसः स्यात्प्रागभाववत्त्वं च ।
वर्तत एव तदानीं रक्तं नास्तीति धीप्रसङ्ग इति ॥ ८४ ।

## साधर्म्यप्रकरणम् ॥

सप्तानामपि चोक्तं साधर्म्यं ज्ञेयता पदार्थानाम् ।
द्रव्यादिपञ्चकस्यानेकत्वं भावता च साधर्म्यम् ॥ ८५ ।

समवायित्वं च तथा सत्तावन्तस्त्रयः स्युराद्याश्च ।
यद्यप्येकघटादौ नास्त्येवानेकतेति चाव्याप्तिः ॥ ८६ ॥

ये च पदार्थविभाजकधर्मास्तिष्ठन्त्यनेकभावेषु ।
तादृक्षधर्मवत्त्वं तदर्थ एवेति वारणं बोध्यम् ॥ ८७ ॥

षट् च गुणादय एते निर्गुणका निष्क्रिया भवन्त्येव ।
यद्यपि निर्गुणकत्वं जनिकाले स्याद्घटादिमद्द्रव्ये ॥ ८८

तदपि च गुणवदवृत्तिकधर्माश्रयता विवक्षिता चात्र ।

सामान्यादिचतुष्कं सामान्यविहीनमत्र वक्तव्यम् ।
अणुपरिमाणं यत्तद्भिन्नानां कारणत्वमुक्तं स्यात् ॥ ९१

अणुपरिमाणं किंचित्प्रति वा स्यात्कारणं न कुत्रापि ।
नहि स्वाश्रयजन्यद्रव्यगते कारणं हि परिमाणे ॥ ९२

स्वसमानजातिकं यत्स्वोत्कृष्टं चापि तत्र परिमाणे ।
नियमेन कारणं स्यान्महदारब्धं महत्तरं च यथा ॥ ९३

अणुजन्यमणुतरं स्यादप्रत्यक्षं तदा भवेत्सर्वम् ।
एवं परममहत्परिमाणं चातीन्द्रियं च सामान्यम् ॥ ९४

अणुपरिमाणवदेवं यश्च विशेषो भवेत्स बोद्धव्यः ।
इदमपि योग्यध्यक्षे विषयस्य न कारणत्वमेव स्यात् ॥

सामान्यं यच्च भवेत्तज्ज्ञायमानं न सन्निकर्षः स्यात् ।
यज्ज्ञायमानलिङ्गं नानुमितौ हेतुरित्यभिप्रायात् ॥ ९६

आत्मगतं परिमाणं कारणमेवात्ममानसाध्यक्षे ।
[illegible]

यदतीतं यदनागतमतीन्द्रियं यद्यदेव वस्तु भवेत् ।
तत्तद्विषयकयोगिप्रत्यक्षे हेतुता भवेत्तेषाम् ॥ ९९ ॥

विषयतयैव तथा स्याल्लिङ्गतया चेति वक्तुमुचितेति ।
तद्भिन्नानां कारणतेत्युक्तिरपि स्यादसंगतैवालम् ॥ १००

तत्कारणं तु यत्स्यादनन्यथासिद्धनियतपूर्वस्थम् ।
समवायि जनकमेकं चासमवायि द्वितीयजनकं स्यात् ॥

स्यादपि निमित्तमन्यच्चेति त्रेधा व्यभाजि जनकत्वम् ।
उत्पद्यते च कार्यं यत्समवेतं तदेव समवायि ॥ १०२ ॥

कार्येण कारणेन स्याद्वा चैकत्र यत्तु समवेतम् ।
सत्कारणं तदेवं भवति द्वेधा द्वितीयजनकत्वम् ॥ १०३

तदुभयभिन्नं जनकं यत्तु भवेत्तन्निमित्तजनकं स्यात् ।
एतेषां त्रिविधानां जनकानां लक्षणं तु निष्कृष्टम् ॥

समवायावच्छिन्ना या च भवेत्कार्यता तयैव तु या ।

यश्च भवेत्समवायी यश्च भवेत्स्वसमवायिसमवेतम् ।
तत्तादृप: संगस्तदन्यतरयोगतो ह्यवच्छिन्ना ॥ १०७ ॥

कारणता च भवेद्या तदाश्रयत्वं द्वितीययुगळस्य ।
समवायिकारणत्वं यच्च भवेदसमवायिजनकत्वम् ॥ १०

एतद्वितयविभिन्नं हेतुत्वं तन्निमित्तहेतुत्वम् ।
येन सह पूर्वभावो गृह्येत च यस्य सान्यथासिद्धिः ॥

आद्या पुनर्द्वितीया कारणमादाय यस्य गृह्येत ।
कार्याच्च पूर्वभावो ह्यन्या पुनरित्थमन्यथासिद्धिः ॥ ११

अन्यस्य पूर्वभावं ज्ञात्वैव च यस्य पूर्ववृत्तित्वम् ।
गृह्येतान्यच्च पुनस्त्वज्ञात्वा जनकपूर्ववृत्तित्वम् ॥ १११ ॥

न ज्ञायते च पूर्वस्थितिमत्त्वं चेति पञ्चमं ह्येतत् ।
क्लृप्तनियतपूर्वस्थितिमद्भिन्नं स्याद्यदेव तच्चेति ॥ ११२ ॥

एवमभूवन्पञ्च प्रतियोगिन्यस्त्वनन्यथासिद्धेः ।

गुणकर्मणोर्द्वयोः स्याद्द्वितीयजनकत्वमेव नान्यस्य ॥११५॥

नित्यद्रव्याणि ऋते सर्वत्रैवाश्रितत्वमेव स्यात् ।
द्रव्येषु नवसु च स्याद्गुणवत्त्वं द्रव्यता च साधर्म्यम् ॥

क्षितिरापो जलतेजोवायुमनांसि स्युरेव पञ्चापि ।
वेगक्रियापरत्वापरत्वमूर्तत्वसंश्रितानि सदा ॥ ११७ ॥

कालदिगात्मव्योम्नां परममहत्त्वं च सर्वगततापि ।
क्षित्यादिपञ्च हि स्युर्भूतानि स्पर्शवन्ति चत्वारि ॥ ११८

क्षित्यादिषु च चतुर्षु द्रव्यारम्भो भवेन्न सर्वत्र ।
अन्त्यावयविनि तस्यासत्त्वादव्याप्तिरेव न च वाच्या ॥

द्रव्यसमवायिकारणवृत्तिमती जातिरेव या च भवेत् ।
द्रव्यत्वव्याप्या या भवेच्च तद्वत्त्वमेव तस्यार्थः ॥ १२०

अव्याप्यवृत्तयो ये विशेषपूर्वा गुणाश्च तद्वत्त्वम् ।
क्षणिकाश्च ये भवेयुर्विशेषपूर्वा गुणाश्च तद्वत्त्वम् ॥ १२१

स्वाधारवृत्त्यभावप्रतियोगित्वं यदेव विख्यातम् ।
किंचिदवच्छेदेन स्याच्छब्दोऽन्यत्र तस्य चाभावः ॥१२३

ज्ञानादि चात्मनि स्यादङ्गावच्छिन्नमेव नान्यत्र ।
ज्ञानादिकश्च शब्दो ह्यव्याप्यवृत्तिर्विशेषगुण एव ॥ १२४

यः स्यात्क्षणस्तृतीयस्तस्मिन्नाशो भवेच्च यस्तस्य ।
प्रतियोगित्वं यत्स्यात्क्षणिकत्वं तद्भवेदिहाभिमतम् ॥१२५॥

योग्यविभुवृत्तयो ये विशेषपूर्वा गुणाश्च ते सर्वे ।
स्वोत्तरजाततथाविधगुणैर्विनाश्याः क्षणे तृतीये स्युः ॥

ज्ञानादिशब्द आद्यो द्वितीयतादृग्गुणेन नाश्यः स्यात् ।
उक्तमिदं साधर्म्यद्वितयं चाकाशजीवयोर्युक्तम् ॥ १२७ ॥

न च युक्तं क्षणिकत्वं चैतत्साधारणं हि रूपादेः ।
तादृशरूपादिकवत्क्षित्यादौ तद्भवेदतिव्याप्तम् ॥ १२८ ॥

रूपत्वादिकजातिबहुक्षणावस्थितेऽपि रूपादौ ॥ १३१ ॥

अस्तीति तद्व्युदासो जन्यपदं नित्यधीनिरासाय ।
आकाशजीवयोश्चेत्साधर्म्यं तर्हि नैव जन्येति ॥ १३२

द्वेषत्वादिकजातिं चादाय भवेत्समन्वितं लक्ष्म ।
परममहत्त्वं तादृग्द्वित्वादि च तादृशो गुणो भवति ॥

द्वित्वादिकं चतुर्थे क्षणे विनष्टं भवेदिति स्पष्टम् ।
तादृग्गुणद्वयस्य व्यावृत्त्यर्थं विशेषपदमुक्तम् ॥ १३४ ॥

प्रत्यक्षविषयतैवं द्रवत्ववत्त्वं च रूपवत्त्वं च ।
आद्यत्रिकस्य चैतत्साधर्म्यं स्याच्च जातिसंघटितम् ॥ १३

रूपाद्याश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तत् ।
प्रत्यक्षमत्र चक्षुर्जन्यं स्यादात्मनो व्युदासार्थम् ॥ १३

रसवद्द्वयं गुरु स्याद्द्रुतये नैमित्तिकं द्रवत्वं स्यात् ।
नैमित्तिकं द्रवत्वं घटवह्न्यादौ भवेत्तदव्याप्तम् ॥ १३७

अन्यादृग्भूतान्यपि चात्मानो विशेषगुणयुक्ताः ।
यस्य च यत्साधर्म्यं वैधर्म्यं तद्भवेत्तदितरस्य ॥ १३९ ॥

इति साधर्म्यप्रकरणम् ॥

---

## पृथिवीनिरूपणम् ॥

तत्र च गन्धवती स्यान्नित्यानित्या च सा द्विधा पृथिवी ।
गन्धवती पृथिवी स्यादिति लक्षणमेतदेव वक्तव्यम् ॥

गन्धादिकरणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं तत् ।
नातो जनिकालीने जातविनष्टे घटादिमद्द्रव्ये ॥ १४१ ॥

गन्धादेर्विरहेऽपि स्यादव्याप्तिप्रसक्तिलेशोऽपि ।
जातिर्न शरीरत्वं वसुंधरात्वादिना च सांकर्यम् ॥ १४२

सुखदुःखादिमसाक्षात्कारावच्छेदकं शरीरं स्यात् ।
अनिन्द्रियता यदि जातिस्तदेन्द्रियाणां हि लक्षणं सा स्यात् ॥

किञ्च विशेषगुणो ये तदनाश्रयताविशेषणेन युता ।
ज्ञानस्य जनकभूतो मानसयोगश्च यस्तदाश्रयता ॥ १४५

सर्वेन्द्रियेषु लक्षणमेतत्सम्यक्समन्वितं भवति ।
श्रोत्रेतरेन्द्रियेषु क्वापि विशेषो गुणो न कश्चिदपि॥ १४

श्रोत्रे तु शब्द एको विशेषपूर्वो गुणो न चान्य इति ।
शब्देतरत्वमेतच्छ्रोत्रेन्द्रियसंग्रहार्थमेव स्यात् ॥ १४७ ॥

योऽनुद्भूतविशेषादिमगुणरूपादिरिन्द्रिये सोऽस्ति ।
श्रोत्रेतरेन्द्रियाणामुद्भूतत्वं च संग्रहायैव ॥ १४८ ॥

संख्यादिरेव शब्दादितरश्चोद्भूत इन्द्रियेषु गुणः ।
अस्तीत्यतो विशेषेत्युक्तं संख्यादिवारणायैव ॥ १४९ ॥

ज्ञानस्य कारणत्वं मनसो योग विशेषणं न यदि ।
कालमनःसंयोगः कालेऽप्यस्तीत्यतिप्रसङ्गः स्यात् ॥ १५

काले रूपाभावप्रत्यक्षे कारणं हि नेत्रेण ।

सत्यन्तस्य निवेशाद्दिग्मितिव्याप्तिवारणं भाव्यम् ।
दिक्कालातिव्याप्तेर्वारकमेतद्विशेष्यदलमुक्तम ॥ १५३ ॥

नन्वात्मवारकं स्यादात्मान्यत्वं कुतो लघु न चोक्तम् ।
इति चेन्न तत्र तत्र स्युर्हि मते ज्ञानहेतवो बहवः ॥ १५

चर्ममनोयोगः स्याद्विषयस्यापीन्द्रियावयवयोगः ।
एवं बहुप्रकारास्तत्तद्भेदा निवेशनीयाः स्युः ॥ १५५ ।

तदपेक्षया लघु स्यात्सत्यन्तनिवेशनं भवेद्युक्तम् ।
नित्याणुरूपभाक्सा सावयवा सा तु कार्यरूपा स्यात् ॥

त्रेधा भवेदनित्या सा च शरीरेन्द्रिये तथा विषयः ।
अङ्गमिदमस्मदीयं गन्धस्य ग्राहकं भवेद्घ्राणम ॥ १५७

स्थूलशिलामृद्दारुप्रभृतिः स्यात्पार्थिवो विषयः ।
जललक्ष्म शीतलत्वं नित्यत्वादिर्भवेच्च पूर्वमिव ॥ १५८

इन्द्रियमपि रसनं स्याद्रसस्य ग्राहकं हि रसनाग्रे ।
[illegible]

एकस्तु भौम आसीद्दिव्यश्चौदर्य आकरजानिश्च ।
वह्नयादिर्भौमः स्याद्दिव्यः स्याद्विद्युदादिरौदर्यः ॥ १६१

जठरस्थितोऽग्निरेवं ह्याकरजः स्यात्सुवर्णरजतादिः ।
रूपेण रहित एव स्पर्शस्याप्याश्रयो भवेद्वायुः ॥ १६२ ॥

स्यात्सर्वगात्रवृत्ति त्वगिन्द्रियं त्विन्द्रियं जनस्यैव ।
वृक्षादिकम्पहेतुर्विषयः स्याद्वायुरेव सर्वत्र ॥ १६३ ॥

पृथिवीत्वं च जलत्वं तेजस्त्वं वायुता च जातिः स्यात् ।
नाकाशत्वं जातिः स्यादेकव्यक्तिकत्वतो दोषात् ॥ १६४

व्यक्तेरभेद एवं तुल्यत्वं संकरोऽनवस्था च ।
रूपस्य हानिरेवं स्याज्जातेर्बाधकोऽप्यसंबन्धः ॥ १६५ ॥

जातिपदमत्र बोध्यं जातित्वस्यापि संग्रहार्थमिति ।
जातित्वबाधकं स्यादाद्यत्रिकं जातिबाधकं चान्यत् ॥

आद्यत्रिकेऽपि चाद्यं गगनत्वे बाधते हि जातित्वम् ।
[illegible]

जातिमपि बाधतेऽसौ समवायाभावयोरसंबन्धः ॥ १६९ ॥

व्यक्तेरभेद एकव्यक्तिकता सापि चेदृशी वाच्या ।
भेदस्य कस्य चित्स्यात्प्रतियोग्यनुयोगिवृत्तिताद्वितयम् ॥

यत्तद्योगयुगेन स्वविशिष्टान्यत्वमेव सा भवति ।
तादृशभेदाविशिष्टं भवति घटत्वादिकं सुलभमेव ॥ १७१ ॥

नीलकलशभेदप्रतियोगी नील एव कलशः स्यात् ।
रक्तो घटोऽनुयोगी चैतद्वयवृत्तिता घटत्वे स्यात् ॥ १७२ ॥

तद्भिन्नत्वं गगनत्वे स्याज्जातित्वमेव नो तत्र ।
किंचिद्भेदपदेन ग्राह्यो नाकाशभेद एवमिव ॥ १७३ ॥

गगनान्य एव तादृग्भेदानुयोगी न तत्र गगनत्वम् ।
गगनस्य चैकतातो भेदविशिष्टान्यदेव गगनत्वम ॥ १७४ ॥

तुल्यत्वमपि च तुल्यव्यक्तिकता सा भवेद्धि समपूर्वम् ।
नियतत्वं व्यापकता घटत्वकलशत्वयोस्त इष्टचरी ॥१७५॥

सामानाधिकरण्यं स्वाभावस्याश्रये च या वृत्तिः ।
स्वाश्रयनिष्ठाभावप्रतियोगित्वं च ये त्रयो योगाः ॥ १७७ ॥

एतैस्त्रिभिश्च योगैर्जातिविशिष्टत्वमेव सांकर्यम् ।
मूर्तत्वरूपजातेर्वैशिष्ट्यं वर्तते हि भूतत्वे ॥ १७८ ॥

सामानाधिकरण्यं भूम्यादौ वर्तते द्वयोरेव ।
मूर्तत्वशून्यगगने भूतत्वं वर्तते तथा मनसि ॥ १७९ ॥

भूतत्वरहित एव स्यान्मूर्तत्वं तथा च तैर्योगैः ।
मूर्तत्वेन च जात्या वैशिष्ट्यं प्राप्तमेव भूतत्वे ॥ १८० ॥

इति तत्र जातिता नेत्यभ्युपगन्तव्यमेव सांकर्यात् ।
सीमातिलङ्घनं स्यादनवस्था जातिमेव न सहेत ॥ १८१ ॥

सामान्ये यदि जातिस्तत्र च जातिस्तथा पुनस्तत्र ।
जात्यन्तरं च तत्रेत्यनवस्था जातिबाधिका जातौ ॥ १८२ ॥

बाधत एव विशेषे जातिं रूपस्य हानिरिति वाच्यम् ।
व्यावृत्तिः खलु एव स्यात् विशेषस्य रूपमिति तस्य ॥

स्वसमानज्ञानभेदं विषयमवावगाहतेऽनुमितिः ।
तद्विषयत्वं व्यावृत्तिः स्याच्च विशेषेषु सर्वतः सिद्धा ॥

प्रतियोगिना च या स्यादनुयोगित्वं च यद्धर्वेस्त्वस्य ।
समवायस्याभावस्तदन्यतरयोगतस्त्वसंबन्धः ॥ १८६ ॥

समवाये चाभावे जातिं न सहेत चान्तिमो दोषः ।
अनयोश्च वृत्तिमत्त्वं यदि समवायेन तस्य समवायः ॥

तस्य पुनः समवायस्तस्येत्यनवस्थितिर्भवेदेव ।
किंतु स्वरूपयोगादिति जातिः कापि तत्र नैवेति ॥ १८८

यद्यप्यादिमदोषान्निवर्तते जातिरेव समवाये ।
तदपि च वाच्योऽभावे ह्यन्यः स इहास्ति चेन्न दोषो नः

स्याद्व्योम शब्दगुणकं विभु तच्चैकं भवेच्च नित्यं च ।
जन्यानां जनकः स्यात्सर्वाधारो विभुश्च नित्यश्च ॥ १९०

एकोऽप्युपाधिभेदात्क्षणदिनमासादिभेदभाक्कालः ।
परमेतदपरमेतत्स्यादिति शब्दप्रयोगहेतुश्च ॥ १९१ ॥

करणं सकर्तृकं स्याच्चैतन्यं नैव गात्रमात्रेऽपि ॥ १९३ ॥

व्यभिचारान्मृतगात्रे न तथात्वं चेन्द्रियेषु कस्यापि ।
तेषामप्युपघाते ह्यनुभवसिद्धा स्मृतिः कथं वा स्यात् ॥

नैव मनोऽपि तथा स्याज्ज्ञानाद्यध्यक्षलोप एव स्यात् ।
धर्माधर्माधारश्चाध्यक्षः स्याद्विशेषगुणयोगात् ॥ १९५ ॥

सारथिरिव रथगत्या ह्यनुमेयोऽयं प्रवृत्तिसुखहेतोः ।
सुखदुःखबुद्धिहेतुस्तदिन्द्रियं स्वान्तरं भवेद्धि मनः ॥

प्रत्यात्मनियतमेतत्संख्याहीनं भवेच्च परमाणु ।
द्वेधा गुणा भवेयुः सामान्यविशेषभेदतः सिद्धाः ॥ १९७

संख्यादयो भवेयुः पञ्च परत्वापरत्वगुरुताश्च ।
एते सामान्यगुणास्तद्भिन्नाश्चाखिला विशेषगुणाः ॥ १९८

द्विविधा गुणाश्च सर्वे द्रव्येष्वेवान्यतो न कुत्रापि ।
सर्वे गुणा न सन्ति द्रव्ये कुत्रापि तत्र तत्र स्युः ॥ १९९

अष्टौ महेश्वरे स्युर्मनसि तथा तद्गुणव्यवस्थेयम् ।
स्पर्शादयोऽष्ट वेगः संस्काराख्यो भवन्ति वायुगुणाः ॥

स्पर्शादयोऽष्ट रूपं द्रवत्ववेगौ च तेजसस्तु गुणाः ।
स्पर्शादयोऽष्ट वेगः स्नेहगुरुत्वद्रवत्वरूपरसाः ॥ २०२

सन्ति जले हि पृथिव्यामेते स्नेहं विनैव गन्धयुताः ।
बुद्ध्यादिषट्कसंख्यादिपञ्चकभावना ह्यदृष्टं च ॥ २०

जीवगुणाः कालदिशोः संख्यादिपञ्चकं च खे शब्दः ।
संख्यादिपञ्चकेच्छाद्वेषप्रयत्ना महेश्वरेऽष्टगुणाः ॥ २०४

वेगः परापरत्वे पञ्च च संख्यादयो गुणा मनसि ।
द्रव्येषु तत्र तत्र स्थिता गुणास्ते च ते विविच्योक्ताः ॥

एते गुणाश्च सर्वे ग्रन्थान्त्यभागे परं निरूप्यन्ते ।
तत्र च बुद्धेर्भेदा बहवः सन्त्यत्र ते निरूप्यन्ते ॥ २०६

बुद्धिर्द्विधा भवेत्सा त्वनुभवरूपा तथा स्मरणरूपा ।

एवं षड्विधमुक्तं प्रत्यक्षं घ्राणगोचरो गन्धः ।
गन्धत्वादिरपि स्याद्रसो रसत्वादिकं च रसनायाः ॥२०

श्रोत्रस्य गोचरः स्याच्छब्दः शब्दत्वमेवमेव स्यात् ।
उद्भूतरूपतद्द्रव्याणि विलोचनस्य योग्यानि ॥ २१०

एवं पृथक्त्वसंख्ये परापरत्वे विभागसंयोगौ ।
स्नेहो द्रवत्वमेवं परिमाणं चापि ते क्रियाजाती ॥ २११

समवायोऽपि च योग्यद्रव्यगता लोचनस्य योग्याः स्युः
गृह्णाति चक्षुरेतानालोकोद्भूतरूपयोर्योगात् ॥ २१२ ॥

उद्भूतरूपवद्यत्तद्द्रव्यं त्वचोऽपि योग्यं स्यात् ।
मनसा त्वचोऽपि योगो ज्ञाने सर्वत्र कारणं भवति ॥

मतिकृतिसुखदुःखेच्छाद्वेषा ग्राह्या भवन्ति मनसैव ।
प्रत्यक्षे तु महत्त्वं यत्तद्धेतुश्च षट्प्रकारेऽपि ॥ २१४ ॥

द्रव्याणां प्रत्यक्षं तत्समवायेन कारणं भवति ।

तत्रेन्द्रियं तु करणं विषयेन्द्रियसंगतिः पुनः षोढा ।
द्रव्याणां प्रत्यक्षं संयोगाद्यश्च तत्र समवेतम् ॥ २१७ ॥

तद्विषयं प्रत्यक्षं संयुक्ते यच्च तत्र समवायात् ।
तत्र समवेतविषयं तत्संयुक्तेऽपि यच्च समवेतम् ॥ २१८

तत्समवायेन भवेत्केवलसमवायतश्च शब्दस्य ।
शब्दत्वविषयकं स्यात्समवेते संगतेश्च समवायात् ॥

यदभावविषयकं स्यात्प्रत्यक्षं तद्विशेषणतयैव ।
यत्र स्याद्यदि तत्तर्ह्युपलभ्येत नोपलम्भ इति ॥

या स्यात्प्रसक्तिरेषा योग्यानुपलब्धिरेव सा हेतुः ।
प्रतियोगिसत्त्वतो यत्प्रसञ्जनं तत्प्रसञ्जितो यः स्यात् ॥

तत्प्रतियोगिकता या सानुपलम्भे हि योग्यता भवति ।
समवायविषयकं यत्तत्प्रत्यक्षं विशेषणतयैव ॥ २२२ ॥

व्यापारस्त्रिविधः स्यादलौकिकः सन्निकर्ष इत्युक्तः ।

इन्द्रियसंबद्धं यत्तद्वस्तुविशेष्यकं हि यज्ज्ञानम् ।
तत्र प्रकारभूतं सामान्यं यद्भवेच्च तज्ज्ञानम् ॥ २२५ ॥

वक्तव्यं तेन भवेद्धूलीपटले च धूमविज्ञानात् ।
धूमा इत्यखिलानां धूमानां ज्ञानसंभवो युक्तः ॥ २२६ ॥

सामान्यमात्रमेव स्याद्यदि चैतद्दिने घटज्ञानम् ।
दिवसे परे घटा इत्यखिलानां ज्ञानमेव किं न स्यात् ॥

ज्ञानप्रकारभूतं सामान्यं तद्दिनेऽपि चास्त्येव ।
ज्ञानस्य हेतुतायां ज्ञानाभावात्तदा न दोषः स्यात् ॥२२८

घ्राणजसौरभविषयं प्रत्यक्षं यत्ततश्च यज्ज्ञानम् ।
सुरभिश्चन्दनखण्डस्त्विति तत्र चाक्षुषे हि तद्धेतुः ॥२२९

आद्यद्वितीययोरप्युभयोर्ज्ञानस्वरूपतोपगमे ।
उभयोः कथं हि भेदः पृथग्विभागोऽपि वा कथं घटते ॥

इति न च वाच्यं तत्र त्वाद्यं स्वस्याश्रयेषु संबन्धः ।

युक्तस्य सर्वदा स्याद्योगजसाह्येन चेतसा भानम ।
युञ्जानस्य तु चिन्तासहकृतमनसैव सर्वदा भानम ॥२३

अत्र निरूपितमासीद्युगलं प्रत्यक्षयोश्च संपूर्णम ।

इति प्रत्यक्षखण्डः ॥

---

## अनुमानखण्डः ॥

---

व्याप्तिज्ञानं करणं व्यापारः स च भवेत्परामर्शः ॥ २३

अनुमायां व्यापारस्तज्जन्यस्तज्जकारणं च स्यात् ।
पूर्वं महानसादौ धूमे व्याप्तिस्तु गृह्यते वह्नेः ॥ २३५ ॥

येन स पश्चान्मनुजो गत्वा चाद्रिं विलोकयन्धूमम् ।
स्मरति च पश्चाद्व्याप्तिं ततः परं तस्य जायते ज्ञानम् ॥

वह्निव्याप्यो धूमो यस्तद्वानित्यदःपरामर्शात् ।

तद्व्यापारवदासीद्व्याप्तिज्ञानं हि कारणं तत्र ।
तस्मादनुमितिकरणं त्वनुमानं चेति लक्षणं सम्यक् ॥

यज्ज्ञायमानलिङ्गं त्वनुमितिकरणं न हीति वक्तव्यं ।
भूतभाविष्यल्लिङ्गादनुमितिरिष्टा तदा न च स्यात्सा ॥२

व्याप्यस्य पक्षवृत्तिर्या तज्ज्ञानं भवेत्परामर्शः ।
व्याप्त्या यश्च विशिष्टं तद्वैशिष्ट्यावगाहि यज्ज्ञानम् ॥

तदनुमितौ जनकं स्यात्तच्च द्वेधा भवेदिति स्पष्टम् ।
व्याप्यः पक्ष इति स्यात्पक्षः स्याद्व्याप्यवानिति ज्ञानम्

तज्जन्यानुमितिः स्याद्द्वेधा पक्षे तु साध्यमित्येका ।
पक्षस्तु साध्यवानित्यपरा सेति द्विधा परामर्शात् ॥ २

पक्षश्च साध्यवानित्येकाविधैवेति सा परे तूचुः ।

---

## पूर्वपक्षव्याप्तिः ॥

यत्र च मीनः साध्यो न तत्र नीरे भवेदतिव्याप्तिः ।
मीनवदन्यघटादिप्रवृत्तेः सत्वाच्च नीर एवेति ॥ २४६ ॥

येन च संबन्धेन स्यात्साध्यं तेन साध्यवान्बोध्यः ।
सलिलं यत्र च साध्यं तत्राव्याप्तिस्तु मीनवत्त्वे स्यात् ॥

समवायेन च वारि स्वावयवे स्यात्तदन्यदेव सरः ।
मीनस्य तत्र वृत्तेरव्याप्तिः स्यात्तदेति तद्युक्तम् ॥ २४८ ॥

योऽवच्छेदकधर्मो विधेयतायां तु तेन धर्मेण ।
यावच्छेदकतावच्छिन्ना स्यात्तन्निरूपिता या स्यात् ॥२४९॥

प्रतियोगिता तु तस्या निरूपको भेद एव यश्च स्यात् ।
तद्वान्साध्यवदन्यो ग्राह्यो नो चेद्भवेत्तदाव्याप्तिः ॥ २५० ॥

तत्तन्नीरवदन्यत्सरो भवेत्तत्र मीनवत्त्वस्य ।
सत्त्वात्तथा निवेशे सरो भवेन्नैव नीरवद्भिन्नम् ॥ २५१ ॥

किं तु तटादि तथा स्यान्न तत्र मीनोऽस्त्यतो न चाव्याप्तिः ।

मीनवदन्यद्यत्स्यात्तत्र च समवाययोगतोऽसत्त्वात् ।
मीनस्येत्यथवा स्याद्वृत्तियोगत्वरूपतश्च यदि ॥ २५४ ॥

यत्र च साध्यो वह्निर्धूमो हेतुर्भवेच्च तत्रैव ।
वन्हिमदन्यह्रादादौ कालिकसंबन्धतो हि धूमस्य ॥ २५५

वृत्तेरव्याप्तिः स्यात्तथा निवेशे तु नोदितौ दोषौ ।
धूमवदन्यद्यत्स्यात्तत्रायोगोळके तु संयोगात् ॥ २५६ ॥

वन्हेश्च वृत्तिमत्त्वादतिप्रसंगस्य संभवो नैव ।
वह्निमदन्यहृदादौ कालिकयोगेन तत्र धूमस्य ॥ २५७ ।

सत्त्वेऽपि नोक्तयोगादसत्त्वतो नैव तत्र चाव्याप्तिः ।
साध्यवदन्यनिरूपितवृत्तित्वं यद्यदेव वर्तेत ॥ २५८ ॥

तत्सामान्याभावो निवेशनीयो न चेदतिव्याप्तिः ।
धूमवदन्यहृदादिमयत्किंचिद्वृत्त्यभाववत्त्वस्य ॥ २५९ ॥

वह्नौ च तत्र सत्त्वादिति पूर्वोक्तं यदेव तद्युक्तम् ।

शुद्धं यत्र विशिष्टं द्वितयस्यैक्याद्विशिष्टसत्तायाम् ।
साध्यवदन्यगुणादिमवृत्तित्वस्यैव वर्तमानत्वात् ॥ २६

साध्यवदन्यनिरूपितवृत्त्यनवच्छेदकत्वमेवात्र ।
साधनतावच्छेदकविशेषणं चेत्तदा न दोषः स्यात् ॥

शुद्धविशिष्टद्वितयं त्वेकं चेदपि विशिष्टसत्तात्वम् ।
साध्यवदन्यगुणादिमवृत्त्यनवछेदकं भवत्येव ॥ २६४

स गुणो विशिष्टसत्तावानिति बुद्धेरसंभवादेव ।
एवं चेदपि सत्तासाध्यकजातौ भवेदिहाव्याप्तिः ॥ २६

सत्तावदन्यजातौ निरुक्तयोगेन वृत्त्यसिद्धत्वात् ।

इति पूर्वपक्षव्याप्तिवादः ॥

---

## सिद्धान्तव्याप्तिनिरूपणम् ॥

वह्नियत्र च साध्यो धूमो हेतुर्भवेच्च तत्रैव ।
धूमाधिकरणवृत्तिर्घटाद्यभावो न वन्ह्यभावः स्यात् ॥२६

तत्प्रतियोगिघटान्यो वह्निस्तस्याश्रये च धूमोऽस्ति ।
इति तत्र लक्षणं स्याद्व्यभिचारिणि नो भवेदतिव्याप्तिः ।

वन्हेरधिकरणायोगोलकवृत्तेश्च धूमविरहस्य ।
प्रतियोग्येव च धूमो नाप्रतियोगी कदापि धूम इति ॥

एवमपि पर्वतादौ तत्तद्वन्ह्याद्यभावसत्त्वेन ।
प्रतियोग्येव च साध्यं त्विति तत्राव्याप्तिरेव दुर्वारा॥२७

प्रतिपूर्वयोगितावच्छेदकताशून्य एव यो धर्मः ।
सोऽवच्छेदकधर्मो विधेयतायां च तद्वता साधम् ॥

साध्येन साधनस्य स्यादेकाधारवृत्तिता ग्राह्या ।
तेनैव पर्वतादौ तत्तद्वन्ह्याद्यभावसत्त्वेऽपि ॥ २७३ ॥

वन्हित्वावच्छिन्नाभावासत्त्वेन तत्र नाव्याप्तिः ।

हेतावधिकरणं स्याद्विशिष्टसत्त्वे ततो न चाव्याप्तिः ॥२

या स्याद्विशिष्टसत्ता सा सत्तातोऽतिरिच्यते नातः ।
सत्तावति च गुणादौ द्रव्यत्वादेरभावसत्त्वेऽपि ॥ २७

सत्ता विशिष्टसत्तात्वेन पुनर्द्रव्य एव वर्तेत ।
नो चेद्विशिष्टसत्तावानिति बुद्धिर्गुणे कथं न स्यात् ॥

द्रव्यत्वाभावोऽयं द्रव्ये नास्तीति नास्ति चाव्याप्तिः ।
हेतुमति वर्तमानाभावप्रतियोगिता त्ववच्छिन्ना ॥ २७९

तेन च सङ्गेन भवेद्विधेयतायां हि यस्तु संबन्धः ।
भजतेऽवच्छेदकतां न चेद्भवेद्धूमहेतुकेऽव्याप्तिः ॥ २८०

धूमवति पर्वतादौ समवायेनाग्न्यभावसत्त्वाच्च ।
हेतुमति वर्तमानाभावे प्रतियोगिवैयधिकरण्यम् ॥ २८१

आवश्यकं च नो चेत्कपिसंयोगस्य साध्यता यत्र ।
वृक्षस्य पक्षता स्यादेतद्वृक्षत्वहेतुके तत्र ॥ २८२ ॥

नातस्तत्राव्याप्तिर्व्यधिकरणत्वं भवेदिदं चात्र ॥ २८४ ॥

प्रतियोग्यधिकरणं यत्तदवृत्तित्वं न वक्तुमपि शक्यम् ।
संयोगसाध्यतायां सत्ताहेतौ भवेदतिव्याप्तिः ॥ २८५ ॥

प्रतियोगिनोऽधिकरणे संयोगाभाववर्तनादेव ।
प्रतियोगिव्यधिकरणस्त्वन्योऽभावो भवेत्तु तस्य स्यात् ॥

संयोगरूपसाध्यं त्वप्रतियोगीति तद्विभिन्नं स्यात् ।
प्रतियोग्यधिकरणं यत्तदन्यवृत्तित्वमेतदपि नैव ॥ २८७ ॥

अव्याप्यवृत्तिसाध्ये सद्धेतौ सा भवेत्स्थिराव्याप्तिः ।
कपिसंयोगाभावो गुणे च वृक्षे च वर्तते त्वेकः ॥ २८८

प्रतियोग्यनाश्रयत्वाद्गुणस्य तद्वृत्तिरेव हेतुमति ।
वृक्षेऽपि वर्ततेऽतो व्यधिकरणत्वं द्विधापि नैवेति ॥ २८

प्रतियोग्यनाश्रयत्वं निवेशनीयं च हेतुमत्येव ।
प्रतियोग्यनाश्रयो यो गुणः स हेतोर्न चाश्रयो भवति ॥

योऽवच्छेदकधर्मः प्रतियोगित्वे च तेन धर्मेण ।
प्रतियोगिनोऽधिकरणं यत्र भवेत्तत्र वर्तनं ग्राह्यम् ॥ २९

तेन न विशिष्टसत्तासाध्यकजातौ भवेदतिव्याप्तिः ।
तत्र च विशिष्टसत्ताभावप्रतियोगिनी च या सत्ता ॥

तदनाश्रयो न जात्याश्रय इति लक्ष्मण्यभाव एवान्यः ।
घटकश्चेदपि सत्ताविशिष्टसत्तात्वरूपतो न गुणे ॥ २९४

तस्माद्विशिष्टसत्ताभावस्याप्यत्र लक्ष्मघटकत्वात् ।
साध्यत्वावच्छेदकसंबन्धेनैव वक्तुमुचितं स्यात् ॥ २९

प्रतियोग्यधिकरणत्वं नो चेज्ज्ञानस्य साध्यता यत्र ।
सत्ताया हेतुत्वं तत्रातिव्याप्तिरेव दुर्वारा ॥ २९६ ॥

तत्र ज्ञानाभावप्रतियोगि भवेच्च यादृशज्ञानम् ।
तस्य च विषयतया स्यादधिकरणं हेतुमद्भवेत्सर्वम् ॥

तस्मादन्योऽभावस्तादृशहेत्वाश्रये तु वर्तेत ।

नन्वत्र प्रतियोगी यः कश्चित्स्यात्तदाश्रयाद्भ्रम् ॥ ३००

किं वा विवक्षितं स्यात्तत्सामान्यस्य वा पुनः किं वा ।
योऽवच्छेदकधर्मः प्रतियोगित्वे भवेच्च यः कश्चित् ॥३०

इति ये त्रिधा विकल्पास्तेष्वाद्ये वृक्षपक्षता यत्र ।
एतत्तरुत्वहेतुः कपिसंयोगादिसाध्यके यत्र ॥ ३०२ ॥

कपिसंयोगाभावप्रतियोगी कश्चिदन्यवृक्षे स्यात् ।
तदनधिकरणं हेतोरधिकरणं वृक्ष एव भवतीति ॥ ३०३

अव्याप्तिरेव सा स्याद्द्वितीयपक्षोऽपि नैव संभवति ।
प्रतियोगिव्यधिकरणाभावस्यैवाप्रसिद्धिरिति वाच्यम् ॥

सर्वस्याभावस्य स्यात्प्रतियोग्यन्तरं च सर्वत्र ।
पूर्वक्षणो हि यः स्यात्तद्वृत्तिविशिष्टमेव यत्स्वं स्यात् ॥

तदभाव एव यः स्यात्प्रतियोगी केवलान्वयी स स्यात् ।
तेन च समाधिकरणो बभूव सर्वोऽप्यभाव एवेति ॥३०

प्रतियोग्यनाश्रयत्वं तन्न [illegible]

धूमाभावः साध्यो हेतुः स्याद्वह्न्यभाव इत्यत्र ।
साध्यत्वावच्छेदकसंबन्धः स्यात्स्वरूपसंबन्धः ॥ ३०९

तेनोक्तपूर्व एव प्रतियोगी वर्तते हि सर्वत्र ।
तेनाव्याप्तिस्तन्न स्यादिति नोक्तद्वयं तृतीयेऽपि ॥ ३१०

कपिसंयोगाभावः साध्यः स्यात्तत्र हेतुरात्मत्वम् ।
कपिसंयोगाभावाभावप्रतियोगिता गुणाभावे ॥ ३११

गुणसामान्याभावाभावो यावद्गुणात्मको भवति ।
तदवच्छेदकधर्मो गुणसामान्याद्यभावतापि स्यात् ॥

तदवच्छिन्नानाश्रयहेत्वाश्रयतात्मनीति चाव्याप्तिः ।
प्रतियोग्यनाश्रयत्वे यादृक्प्रतियोगिता भवेद्घटिका ॥

तदवच्छेदकभिन्नं भवेदवच्छेदकं हि साध्यत्वे ।
एवं विवक्षणीयं स्यादुक्तातिप्रसङ्गभङ्गोऽपि ॥ ३१४ ॥

कापसयोगाभावे यो स्यात्प्रतियोगिता न सा ग्राह्या ।
तदवच्छेदकधर्मावच्छिन्नानाश्रयो न किंचिदिति ॥ ३१६

ननु च प्रमेयवह्नेः साध्यत्वे धूमहेतुता यत्र ।
तत्र प्रमेयवन्हित्वावच्छिन्नत्वमप्रसिद्धं स्यात् ॥ ३१७ ॥

लघुसमनियतगुरुर्यो धर्मोऽवच्छेदकः स नैवेति ।
इति चेन्न तादृशोऽपि स्यान्नावच्छेदकत्वमिति नैव ॥३१

अत्र घटो नास्ति यथा कम्बुग्रीवादिमांस्तथा नेह ।
इति च प्रतीतिसत्त्वाद्वस्तु समस्तं प्रतीतिबलसिद्धम् ॥३१

ननु कालपक्षके स्याद्घटादिसाध्ये च कालपरिमाणे ।
अव्याप्तिर्दुर्वारा व्यधिकरणाभावदौर्लभ्यात् ॥ ३२० ॥

साध्यत्वावच्छेदककालिकयोगेन सर्वमपि काले ।
अस्तीत्यभावमात्रं प्रतियोगिसमाश्रयं भवत्येव ॥ ३२१

इति चेन्न प्रतियोगित्वस्यावच्छेदकेन योगेन ।

तत्तदवच्छिन्नत्वाद्वितयाभाव: प्रवेशनीय: स्यात् ।
तत्संबन्धेन स्यात्तद्धर्मविशिष्टसाध्यसमवृत्ति: ।। ३२४ ।।

इत्थं च कालपक्षे घटादिसाध्ये च कालपरिमाणे ।
अव्याप्तिर्न भवेदुक्तस्थल इत्यद: समीचीनम् ।। ३२५ ।

प्रकृतेतरैश्च सङ्गैर्या या प्रतियोगिता त्ववच्छिन्ना ।
सर्वेषु तेषु चैव प्रतियोगित्वेषु चोभयाभाव: ॥ ३२६ ।

कालिकसङ्गेनावच्छिन्नत्वाभावतो हि वर्तेत ।
सामान्यपदनिवेशाद्व्यभिचारिणि नो भवेदतिव्याप्ति: ।।

साध्यगतप्रतियोगित्वस्य च सामान्यके तु घटकत्वात् ।

इति सिद्धान्तव्याप्तिनिरूपणम् ।।

---

## पक्षतानिरूपणम् ।।

केवलसिद्धाविरहो न पक्षता स्यात्तु सिद्धसत्त्वेऽपि ।
इच्छा साधयितुं या तस्याः सत्त्वे भवेदनुमितिः सा ॥

अत इच्छाविरहस्य स्याद्वैशिष्ट्यं विशेषणं सिद्धौ ।
एवं चेच्छासत्त्वे सिद्धेः सत्त्वेऽपि पक्षतास्त्येव ॥ ३३१

इच्छासत्ताकाले सिद्धेरसत्त्वेऽपि पक्षता भवति ।
इच्छायाश्चासत्त्वे सिद्धेः सत्त्वेऽपि पक्षता नास्ति ॥

इच्छाविरहविशिष्टा सिद्धिः प्रतिबन्धिका तदास्तीति ।
यत्रेच्छासिद्धिपरामर्शाः क्रमिकाश्च तत्र नेच्छास्ति ॥

सिद्धिश्चेच्छा च परामर्शाः स्युर्यत्र तत्र नो सिद्धिः ।
यत्र परामर्शः स्यादिच्छासिद्धी च नो परामर्शः ॥

एवं कारणविरहात्प्रतिबन्धकसत्त्वतोऽपि नानुमितिः ।
इति कुत इच्छाविरहः सिद्धौ तस्य प्रयोजनं किं वा ॥

इति चेन्न तत्र चैतद्विशेषणं सार्थकं भवत्येव ।

असद्धेतुनिरूपणम् ॥

व्याप्तिश्च पक्षता च स्यात्सद्धेतौ निरूपिते चोभे ।
तच्छून्योऽसद्धेतुर्निरूप्यते सोऽपि पञ्चधा भवति ॥३३

सव्यभिचारविरुद्धौ सत्प्रतिपक्षोऽप्यसिद्धबाधयुतौ ।
इति दोषा अपि पञ्च स्युर्दुष्टानां च पञ्चहेतूनाम् ॥३३८

व्यभिचारश्च विरोधः सत्प्रतिपक्षोऽप्यसिद्धिबाधौ च ।
एकैकदुष्टहेतावेकैकदोषो भवेदिति स्पष्टम ॥ ३३९ ॥

ज्ञानस्य यद्विषयकत्वेनानुमितौ विरोधिता भवति ।
तत्वं च दोषलक्ष्म स्याद्दुष्टानां च दोषवत्त्वं स्यात् ॥

अनुमितिपदमत्र भवेदनुमितितत्करणकान्यतरबोधे ।
अत एव व्यभिचारासिद्धिविरोधाश्च कारणज्ञाने ॥ ३४१

प्रतिबन्धका भवेयुः सत्प्रतिपक्षस्तथैव बाधश्च ।
अनुमितिविरोधिनौ ताविति लक्ष्म समन्वितं च सर्वत्र ॥

अनुमितिविरोधितायां तदन्वयः स्याच्च यद्विषयकत्वम्
यादृशविशिष्टविषयकतार्थकमेवेति वाच्यमिह नो चेत्

पक्षविशेष्यकबाधभ्रमविषयीभूतवन्ह्यभावादौ ।
अतिपूर्वकप्रसङ्गः स्याच्च विशिष्टाप्रसिद्धितो नेति ॥ ३४

ज्ञानमनाहार्यं चाप्रामाण्यज्ञानहीनमपि बोध्यम् ।
एवं निश्चयरूपं नो चेदुक्तातिरिक्तधिषणायाम् ॥ ३४६

अनुमितिविरोधिता नेत्यसंभवः स्यादतस्तथा वाच्यम् ।
अत्रावच्छेदकतातिरिक्तवृत्त्यन्यतास्वरूपैव ॥ ३४७ ॥

यदि च स्वरूपपूर्वकसंबन्धात्मा तदैकदेशेऽपि ।
दोषमतेर्विषयित्वं तादृगवच्छेदकत्ववद्भवति ॥ ३४८ ॥

इति तत्र वन्ह्यभावादिमैकदेशेऽव्यतिप्रसङ्गः स्यात् ।
तन्मात्रविषयबुद्धौ तत्सत्त्वान्नोक्तदोष इति बोध्यम् ॥३

उक्तावच्छेदकता स्वव्यापकतत्कतास्वरूपैव ।

अत्रानाहार्यत्वं त्विच्छाजन्यान्यतास्वरूपं स्यात् ।
अप्रामाण्यज्ञानाभावविशिष्टत्वमेतदेव भवेत् ॥ ३५२ ॥

सामानाधिकरण्यं विषयत्वं कालिकस्त्रिभिर्योगैः ।
अप्रामाण्यज्ञानविशिष्टान्यत्वं हि निश्चयत्वमपि ॥ ३५३

संशयभिन्नमतित्वं चेत्युक्तविशेषणत्रयविशिष्टः ।
यो निश्चयो भवेत्तद्वृत्तित्वविशिष्टमेव विषयित्वम् ॥ ३५

प्रकृतानुमितः स्याच्चेत्तद्रूपस्याश्रयत्वमिह लक्ष्म ।
दोषाणां निष्कृष्टं त्वीदृशदोषा हि दुष्टहेतूनाम् ॥ ३५५

सव्यभिचारस्त्रिविधस्त्वाद्यः साधारणो द्वितीयः स्यात्
एवमसाधारणकोऽनुपसंहारी तथा तृतीयः स्यात् ॥

यस्तु सपक्षविपक्षस्थितिमान्साधारणः स एव स्यात् ।
धूमस्य साध्यतायां वन्हौ हेतौ भवेदिदं लक्ष्म ॥

यश्च सपक्षमहानस एवमयोगोलके विपक्षेऽपि ।

तत्रोभयत्र हेतुः शब्दत्वं नैव वर्तते चेति ।
अन्वयदृष्टान्तो यो व्यतिरेकस्यापि यश्च दृष्टान्तः ॥

एतद्द्वयरहितो यः सोऽनुपसंहारिहेतुरेव स्यात् ।
सर्वस्य पक्षता स्यादभिधेयत्वस्य साध्यता यत्र ॥ ३६२

हेतुः प्रमेयता स्यात्तत्र च सर्वस्य पक्षतावत्त्वात् ।
अन्वयदृष्टान्तस्याभावात्साध्यस्य साधनस्यापि ॥ ३६३

सर्वत्र वृत्तिमत्त्वाद्द्वयोरभावस्य चाप्रसिद्धत्वात् ।
व्यतिरेकपूर्वको यो दृष्टान्तस्तस्य चाप्रसिद्धत्वात् ॥

लक्षणसमन्वयः स्यादुक्तज्ञेयत्वसाधने सम्यक् ।
साध्याधिकरणवृत्तेरभावरूपो विरोधदोषः स्यात् ॥ ३६

यत्र च शब्दः पक्षः साध्यं नित्यत्वमेव कार्यत्वम् ।
हेतुस्तत्र च लक्ष्म त्वस्तीति समन्वयः सुकर एव ॥

साध्यस्य साधको यः साध्याभावस्य साधकोऽप्यन्यः

तज्ज्ञानमेव साध्याभावव्याप्यस्य बुद्धिरूपं स्यात् ।
साध्याभावानुमितौ जनकत्वात्साध्यधीविरोध्येव ॥ ३६८

पक्षः शब्दः साध्यं भवति च नित्यत्वमेव शब्दत्वम् ।
हेतुश्च तत्र साध्याभावे स्यात्साधनं च कार्यत्वम् ॥

तेन च पूर्वोक्तं तत्सत्प्रतिपक्षं भवेच्च शब्दत्वम् ।
पक्षस्वरूपपूर्वासिद्धी व्याप्यत्वपूर्विकासिद्धिः ॥ ३७० ॥

त्रेधा भवेदसिद्धिः स्याद्योऽवच्छेदकस्तु पक्षत्वे ।
तदभाव एव पक्षे पक्षासिद्धिः प्रकीर्त्यते सद्भिः ॥ ३७१

मणिमयपर्वतपक्षे वैश्वानरसाध्यके च धूमादौ ।
पक्षे च पर्वतादौ मणिमयता नेति लक्ष्म चास्त्येव ॥३७२

पक्षे तु हेत्वभावः स्वरूपपूर्वा भवेदसिद्धिश्च ।
पक्षे ह्रदे च साध्ये द्रव्यत्वे धूमहेतुके तत्र ॥ ३७३ ॥

पक्षे ह्रदे तु धूमो नास्तीति च लक्षणं समन्वेति ।

आर्द्रेन्धनस्य योगो यत्र स्यात्तत्र धूम इति सत्वात् ॥

साध्यव्यापकता स्याद्यत्र च वह्निर्न तत्र तद्योगः ।
वह्निरयःपिण्डे स्यात्तत्र तु तद्योग एव नास्तीति ॥ ३७

हेत्वव्यापकता स्यादार्द्रेन्धनयोग एव चोपाधिः ।
तद्वत्वादपि वह्निर्व्याप्यत्वासिद्ध एव भवतीति ॥ ३७८

पक्षे साध्याभावो बाधस्त्वनुमितिविरोधिनी तद्धीः ।
वह्निर्यत्र च पक्षः साध्यमनुष्णत्वमेव तत्रैव ॥ ३७९ ।

हेतौ पदार्थतायामुष्णत्वस्याश्रयो भवेद्वह्निः ।
बाधस्तस्य ज्ञानं साध्यानुमितौ विरोधितामयते ॥ ३८

इति तर्कपद्यरत्नावल्यामनुमानखण्डः ॥

---

## उपमानखण्डः ॥

---

ग्रामीण एव कश्चित्पृच्छति चारण्यकं वनं गत्वा ॥ ३८

गवयस्तु कीदृशः स्यादिति पृष्टे वक्ति चोत्तरं तस्य ।
गोसदृशो गवयः स्यादिति वाक्याकर्णनाद्वनं गत्वा ॥

गोसदृशमेव पिण्डं पश्यन्वाक्यार्थमेव स स्मृत्वा ।
गोसदृशो गवयपदाद्वाच्य इति प्रत्ययं प्रपद्येत ॥ ३८४

उपमितिरियमेव स्यात्करणं स्यात्तत्र चोपमानमिति ।

इत्युपमानखण्डः ॥

---

## शाब्दखण्डः ॥

---

ज्ञानं पदस्य करणं पदजन्यपदार्थधीर्भवेद्द्वारम् ॥ ३८५ ॥

फलमपि च शाब्दबोधः पदजन्यत्वं निवेश्यते न यदि ।
पदधीमतोपि पुंसः प्रत्यक्षपदार्थबुद्धिसत्त्वेऽपि ॥ ३८६ ॥

संबन्धबुध्यभावे संबन्धिनोरग्रहात्कथं स्मरणम् ।
अर्थस्मृतेरभावे व्यापाराभावतः कथं शाब्दः ॥ ३८९

तस्मादपेक्षणीयः शाब्दे शक्तिग्रहस्त्ववश्यं स्यात् ।

---

## शक्तिनिरूपणम् ॥

अस्मात्पदादयं स्याद्बोद्धव्योऽर्थस्त्वितीश्वरेच्छा सा ॥

आधुनिके नाम्न्यपि सा चास्तीत्येकादशेऽहनि सुतस्य
कुर्यात्पिता तु नामेतीश्वरसंकेतसत्वतस्तत्र ॥ ३९१ ॥

शक्तिस्त्वाधुनिके स्यान्नैवेति वदन्ति संप्रदायविदः ।
नव्यास्तु शक्तिरिच्छामात्रं त्वधुनास्ति नाम्न्यपीत्याहुः

शक्तिर्व्याकृतिकोशैरुपमानादाप्तवाक्यबलतश्च ।
सिद्धपदसन्निधानाद्विवृतेर्वाक्यस्य शेषतश्चापि ॥ ३९३

सति बाधके पुनः सा त्यज्यत एव कचिद्यथात्रैव ।
आख्यातस्य च शक्तिर्याकृतिबोध्या तु कर्तरि त्याज्या ॥

शक्यत्वावच्छेदककृत्यानन्त्याच्च शक्तिबाहुल्यात् ।
उचिता कृतौ तु शक्तिर्भवेदवच्छेदकं कृतित्वं स्यात् ॥

एकं ततो हि शक्तिः स्यादेका लाघवादिति व्यक्तम् ।
आख्यातार्थश्च कृतिश्चैत्रादौ भासते प्रकारतया ॥ ३९७

कर्तुश्चानभिधाने प्रथमास्थाने भवेत्तृतीयैव ।
इति नैव वक्तुमुचितं कर्तुः संख्याभिधानविरहे तत् ॥

संख्याभिधानयोग्यः कर्मत्वाद्यनवरुद्धतां प्राप्तः ।
प्रथमान्तपदं यत्स्यात्तदुपस्थाप्यश्च बोध्य एव स्यात् ॥

कर्मत्वादीति च यत्स्यात्तस्येतरविशेषणत्वतात्पर्यम् ।
यत्तस्याविषयत्वं प्रकृते चार्थो विवक्षणीयः स्यात् ॥४००॥

यत्र च गच्छति मैत्रश्चैत्र इवेत्यत्र वारणायैव ।

गच्छति रथ इत्यादौ व्यापारे वापि चाश्रयत्वं वा ।
लक्षणयैव च बोधो व्यापारे गौरवान्न शक्तिरिति ॥४०३

आश्रयताप्रतियोगित्वादौ जानाति नश्यतीत्यत्र ।
बोधो लक्षणयैव स्यादिति वक्तव्यमन्यथा नैव ॥ ४०४

उपमानादपि शक्तिर्गृह्येत यथा तथा पुरैवोक्तम् ।
कोशाद्ग्रहश्च शक्तेः स्यादपि सन्त्यज्यते सति च बाधे ॥

नीलप्रभृतिपदानां कोशाद्रूपे च रूपवति शक्तिः ।
गृह्येत तत्र रूपे शक्तिः स्याल्लाघवान्न रूपवति ॥ ४०६

गौरवतो रूपवतो लक्षणया बोध एव युक्तः स्यात् ।
आप्तोक्तवाक्यतः स्याच्छक्तेर्बोधो यथा तथात्रैव ॥ ४०७

पिकपदवाच्यः कोकिल इति शब्दाद्गृह्यते पिकादिपदे ।
शक्तिरिति व्यवहारादपि शक्तिर्गृह्यते यथात्रैव ॥ ४०८

घटमानयेति वाक्यं प्रयोजकेनोक्तमेव वृद्धेन ।

तस्मात्परं स बालो नय तं घटमानयाशु गामेव ।
एवं रूपाद्वाक्यादावापोद्वापतो घटादिपदात् ॥ ४११ ॥

कार्यान्विते घटादौ शक्तिं गृह्णाति बालको ह्येवम् ।
इत्थं च भूतलादौ घट इति वाक्यान्न शाब्दबोधः स्यात् ।

कार्यान्विते घटादौ बोधसमर्थं भवेद्घटादिपदम् ।
कार्यत्वबोधनं स्याल्लिङादिपदतोऽत्र तस्य चाभावात् ॥

एवं च भूतलादौ घट इति वाक्यान्न शाब्द इति केचित्
तन्न च वाच्यं ह्यादौ कार्ययुते शक्तिबुद्धिजननेऽपि ॥

पश्चात्तु लाघवेन स्यादौचित्यं हि तत्परित्यागे ।
अत एव चैत्र पुत्रस्ते जातो गर्भिणी च कन्या ते ॥४१५

इति वक्तृवाक्यजन्यात्प्रसादमालिन्यतो हि सुखदुःखे ।
अनुमाय तस्य हेतुत्वेन च परिशेषतो हि शब्दस्य ॥४१६

निर्णयजनकतास्त्ववधारयते च शब्दमेवं सः ।

एवं च कार्ययुक्तं त्यक्त्वा शक्तिं घटेषु सर्वत्र ।
युक्ता शक्तिरितीत्थं शक्तिग्रहो वाक्यशेषतो भवति ॥४१५

यवमयचरुरिति वाक्याद्यवपदतो दीर्घशूकवति शक्तिः ।
गृह्येत वाक्यशेषादिति वक्तव्यं न चान्यथा शक्यम् ॥

सर्वेषां सस्यानां पर्णानां शातनं वसन्ते स्यात् ।
तिष्ठन्ति मोदमाना यवास्तु सर्वेऽपि शालिनः कणिशैः ॥

इति वाक्यशेषबलतो निर्णीयते दीर्घशूकवति शक्तिः ।
शक्तिर्न हि प्रियङ्गौ भ्रमाच्च शक्तेः प्रयोग एव स्यात् ॥

विनिगमकस्याभावाद्धर्यादिपदेषु शक्तिबाहुल्यम् ।
एवं विवरणतः स्याच्छक्तेर्बोधो भवेद्विवरणं तत् ॥ ४२३

तत्समवाक्यपदान्तरबोधनरूपं भवेत्तदर्थस्य ।
अत्र घटो नेत्यादेः कलशो नास्तीत्यनेन विवृतिः स्यात् ॥

एवं सिद्धपदानां शक्तिग्रहः सन्निधानतो भवति ।

व्यक्तिं विना न जातिर्भाति ततो व्यक्तिभानमिति केचित्
तन्न व्यक्तेर्भानं व्यक्तौ शक्तिं विना कथं घटते ॥ ४२७ ॥

न च लक्षणया भानं प्रतिसन्धानं विनाप्यनुपपत्तेः ।
व्यक्तेर्भानानुभवाद्व्यक्तौ शक्तिर्भवेन्न चानन्त्यम् ॥ ४२८ ॥

शक्यत्वावच्छेदकधर्मैक्याद्व्यक्तिशक्तिरेकैव ।
शक्तं पदं चतुर्धा यौगिकरूढे च योगरूढं च ॥ ४२९ ॥

यौगिकरूढमपीति क्रमेण तेषां निरूप्यते रूपम् ।
यत्रावयवार्थस्य स्याद्बोधो यौगिकं पदं तत्स्यात् ॥ ४३० ॥

पचतीति धातुतः स्यादवयवशक्त्यैव पक्तृबोध इति ।
पचतीत्यादिकमेव स्याच्च पदं यौगिकं जगत्सिद्धम् ॥४३१॥

समुदायशक्तिमात्राद्यच्च पदं बोधकं भवेद्रूढम् ।
गोपुरमण्टपमीदृक्पदं भवेद्रूढमेव मतसिद्धम् ॥ ४३२ ॥

योगेन रूढितश्चोभयशक्त्या बोधकं तृतीयपदम् ।

केवलयोगजबोधे रूढिज्ञाने विरोधि भवतीति ।
प्राञ्चो वदन्ति नव्या रूढ्योपस्थापिते भवेत्पद्मे ॥ ४३५

रूढ्यर्थबोधबाधे लक्षणया कुमुदबोध एव स्यात् ।
यत्र कुमुदत्वरूपात्तात्पर्यज्ञानमस्ति न हि बोधे ॥ ४३६ ।

पद्मत्वस्य च बाधस्तत्रावयवीयशक्तिरित्याहुः ।
यत्र स्थलपद्मादौ चावयवार्थस्य बाध इति तत्र ॥ ४३७

समुदायशक्तिमात्राद्बोधः पद्मत्वतो भवेत्तत्र ।
लक्षणयैव च बोधः स्थलपद्मं तद्विलक्षणं स्याच्चेत् ॥

तत्स्याद्यौगिकरूढं योगाद्रूढ्यार्थयोर्द्वयोर्यत्र ।
स्वातन्त्र्येण च बोधस्तथा भवेदुद्भिदादिपदमेव ॥ ४३९

तत्रैव चोर्ध्वभेदे कर्ता तु तरुर्भवेच्च गुल्मादिः ।

इति शक्तिनिरूपणम् ॥

---

## लक्षणानिरूपणम् ॥

लक्षणयैव च बोधस्तीरे शक्यप्रवाहसङ्गोऽस्ति ।
यत्रान्वयस्य बाधस्तात्पर्यस्यापि वा भवेद्बाधः ॥ ४४२ ॥

स त्वेव लक्षणाया बीजमिति स्याद्ध लक्षणा तत्र ।
यद्यन्वयस्य बाधो बीजं यष्टीः प्रवेशयेत्यत्र ॥ ४४३ ॥

यष्ट्यन्वयस्य बाधो नेति भवेल्लक्षणा कथं तत्र ।
तात्पर्यानुपपत्त्या यष्टिधरे लक्षणा भवेदेव ॥ ४४४ ॥

तात्पर्यानुपपत्तिर्यदि बीजं तत्र यत्र नास्त्येव ।
तत्रान्वयस्य बाधो बीजं कल्प्यं तु लक्षणायाः स्यात् ॥

गङ्गायां घोष इति व्यवहारे तीरबोधने नैव ।
तात्पर्यमस्ति तत्रैवान्वयबाधं विना त्वनिर्वाहात् ॥ ४४६

तीरत्वेन च तीरे सङ्गश्शक्यस्य गृह्यते तु यदि ।
तीरत्वेन तदा स्याद्बोधस्तीरस्य नान्यथा भवति ॥ ४४७

गङ्गातीरतया स्याद्यदि सङ्गस्य ग्रहो भवेच्च तदा ।

यत्तत्प्रकारकं स्याच्छक्यार्थविशेष्यकं भवेत्स्मरणम् ॥

तत्रैव तत्पदस्य स्यात्सामर्थ्यं च तस्य सुवचत्वात् ।
शक्यार्थस्य च यत्र स्यात्संबन्धः परंपरारूपः ॥ ४५१

लक्षितलक्षणया धीर्भवेद्द्विरेफादिके पदे तत्र ।
रेफद्वयस्य सङ्गो भ्रमरपदे ज्ञायते ततश्च परम् ॥ ४५२

भ्रमरपदसङ्ग एव भ्रमरे तु ज्ञायते ततस्तत्र ।
लक्षितलक्षणयैव स्याद्बोधो नानुभावकं तत्स्यात् ॥ ४५

केवललाक्षणिकं यत्तदर्थबोधे पदान्तरं हेतुः ।
शक्त्या लक्षणया चेतरवाच्योऽनन्वितस्वशक्यार्थः ॥४

यस्तस्य शाब्दबोधे पदसामर्थ्यावधारणादेव ।
वाक्ये तु शक्त्यभावान्न लक्षणा शक्यसङ्गरूपा स्यात्

गंभीरायां नद्यां घोषोऽस्तीति प्रयुज्यते यत्र ।
तत्र नदीपदमेव स्याच्च नदीतीर एव लाक्षणिकम् ॥

तत्र गभीरपदं स्यात्तात्पर्यग्राहकं च वक्तव्यम् ।
एवं भवेद्बहुव्रीहावपि नोक्तान्वयो यदि तदापि ॥ ४५८

चित्रगुरुत्यत्र भवेद्गोपदमेवेह चित्रगोस्वामी ।
यस्तत्र बोधकं स्याल्लक्षणयैवेति चित्रपदमत्र ॥ ४५९ ॥

तात्पर्यग्रहहेतुस्त्वन्यत्राप्येवमेव वक्तव्यम् ।
तत्पुरुषे पूर्वपदे स्वीकार्या लक्षणा ततो बोधः ॥ ४६० ॥

अयमेव राजपुरुषः स्यादिति यत्र प्रयुज्यते तत्र ।
राजपदलक्षणा स्याद्राज्ञः संबन्धवत्यभेदेन ॥ ४६१ ॥

पुरुषे तस्यैवान्वयबोधः स्यान्नान्यथेति मन्तव्यम् ।
अतिरिक्तौ च निपातान्नामार्थौ यौ तयोश्च भेदेन ॥ ४६२

अव्युत्पन्नतयैवान्वयबोधस्यैव चोक्तमुचितं स्यात् ।
नो चेद्राजा पुरुषस्त्वस्तीत्यत्रापि तादृशो बोधः ॥ ४६३

द्वंद्वे न लक्षणा स्याद्धवखदिरावित्यदोविभक्त्यर्थे ।
द्वित्वे प्रकारतातो धवश्च खदिरश्च बुध्यते तत्र ॥ ४६६ ॥

साहित्ये तत्र तयोः स्वीकार्या लक्षणेति न च वाच्यम् ।
साहित्यशून्यतायां सत्यां द्वंद्वस्य दर्शनाद्धेतोः ॥ ४६७ ॥

साहित्यानुभवस्यैवाभावात्तच्च नार्थ इति बोध्यम् ।
वास्तवभेदो यत्र स्यात्तत्र तयोर्द्वन्द्वकल्पनं युक्तम् ॥ ४६८

न च यत्र नीलघटयोरभेद इत्यत्र नो भवेद्द्वन्द्वः ।
इति वाच्यमेव तत्र स्यान्नीलं यत्पदं घटपदं च ॥ ४६९ ॥

नीलत्वं च घटत्वं तयोर्भवेदर्थ एव युक्तः स्यात् ।
यश्चाभेद इति स्यादाश्रययोर्बोधयत्यभेदं सः ॥ ४७० ॥

तस्माच्च नीलघटयोरिति यत्तद्युक्तमेव न हि बाधः ।
यश्च समाहारपदं तत्पूर्वद्वन्द्व एव साहित्यम ॥ ४७१ ॥

यत्र स्यादहिनकुलं तत्र च तस्यानुभूतिरेव यदि ।

इत्थं च कर्मधारयपूर्वकवाक्येऽपि नैव शक्तिरिति ।

## इति लक्षणानिरूपणम् ॥

---

आसक्तिबुद्धिरेका तथा भवेद्योग्यतामतिश्चान्या ॥ ४७४

आकाङ्क्षामतिरितरा तथैव तात्पर्यधीः परा च स्यात् ।
इति मतिचतुष्टयं स्याद्वक्तव्यं शाब्दबोधहेतुरिति ॥ ४७५

भूमीधरो हि भुक्तं वैश्वानरवांश्च देवदत्तेन ।
इत्यादौ न हि बोधः शाब्दोऽतः कारणं तदित्युक्तम् ॥

सा योग्यता पदार्थे पदार्थवत्ता तु या भवेत्तस्याः ।
ज्ञानस्य हेतुतायां न वन्हिना सिञ्चतीत्यतो बोधः ॥

येन पदेन विना स्याद्यच्च पदं नैव शाब्दजननार्हम् ।
तस्मिन्पदे भवेत्तत्पदवत्ता कारणं हि साकांक्षा ॥ ४७८ ।

तेन च हस्ती पुरुषो गौरित्यादौ न शाब्दबुद्धिरिति ।
इच्छा भवेत्तु वक्तुस्तात्पर्यं तन्मतिश्च हेतुः स्यात् ॥४७

यश्च सुखादीनां स्यात्साक्षात्कारो मनश्च तत्करणम् ॥४८

सद्भावे मनसः स्याद्दर्शितमेतत्प्रमाणमनुमानम् ।
साक्षात्कृतिः सुखादेः पक्षः साध्यं भवेत्सकरणत्वम् ॥

साक्षात्कृतित्वहेतुश्चाक्षुषसाक्षात्कृतिर्यथा तद्वत् ।
इति सुखसाक्षात्कारे करणं मन एव सिद्ध्यति स्पष्टम् ॥

ज्ञानानामनुदयतो युगपन्मनसोऽणुता परं वाच्या ।
सर्वानुभूतिसिद्धं ज्ञानानां यौगपद्यराहित्यम् ॥ ४८३ ॥

तन्मनसोऽणुत्वे स्याद्यादिंद्रिये सङ्गतिर्भवेत्तेन ।
ज्ञानं भवेन्न चान्यत्सर्वेन्द्रियसङ्गतिर्विभुत्वे स्यात् ॥ ४८

तर्ह्यनुभूतिविरोधो नानाज्ञानानि चैकदा स्युरिति ।
तस्मान्मनोऽणु सिद्धं द्रव्याणि निरूपितानि संपूर्णम् ॥

इति मनोनिरूपणम् ॥

---

## गुणनिरूपणप्रारंभः ॥

तादृशजातौ मानं त्वनुमानं हीदृशं भवत्येव ।
द्रव्याच्च कर्मणश्च स्याद्भिन्नं जातिमच्च यत्तत्र ॥ ४८७ ।

अस्ति च या कारणता किञ्चिद्धर्मेण सा त्ववच्छिन्ना ।
कारणतात्वाद्धेतोर्दण्डादौ कुंभकारणत्वमिव ॥ ४८८ ॥

पक्षेऽपि कारणत्वे कारणतात्वादिहेतुसद्भावात् ।
किञ्चिदवच्छिन्नत्वं ह्यवश्यमङ्गीकृतेर्भवेद्योऽयम् ॥ ४८९

अन्यूनाऽनतिरिक्तो धर्मोऽवच्छेदकं गुणत्वं स्यात् ।
जातित्वे लाघवमिति लाघवबुध्यैव तद्भवेज्जातिः ॥ ४९

द्रव्याश्रितत्वमेव स्याच्चेद्गुणलक्ष्म चेदतिव्याप्तिः ।
कर्मणि भवेत्तथापि द्रव्यत्वव्यापको गुणो भवति ॥ ४९

तद्वृत्तिव्यापकता या तत्रावच्छेदिका च सत्तान्या ।
या जातिस्तद्गुत्वं द्रव्याश्रितत्वं विवक्षितं लक्ष्म ॥ ४९२

निर्गुणता यदि लक्ष्म स्यात्कर्मणि तद्भवेदतिव्याप्तम् ।

निर्गुणतापि तदा स्याल्लक्ष्मत्याचक्ष्महे तथैवोक्तम् ।
रूपं रसश्च गन्धः स्पर्शः स्नेहः परत्वमपरत्वम् ॥ ४९५ ॥

वेगो द्रवो गुरुत्वं चेति गुणा मूर्तवृत्तयस्त्वेते ।
बुद्ध्यादिषट्कधर्माधर्मप्रयत्नाश्च भावनाशब्दौ ॥ ४९६ ॥

एते गुणा अमूर्तेष्वेव न मूर्तेषु सन्ति कुत्रापि ।
मूर्तामूर्तगुणास्ते ये स्युः संख्यादयो विभागान्ताः ॥ ४९७

संयोगश्च विभागः संख्या द्वित्वादिका यथा च तथा ।
द्विपृथक्त्वादय एते भवन्त्यनेकाश्रिता गुणा एव ॥ ४९८

शिष्टा गुणाश्च सर्वे रूपरसस्पर्शगन्धसंख्याश्च ।
एकत्वं परिमाणं चैकपृथक्त्वं परत्वमपरत्वम् ॥ ४९९ ॥

बुद्धिः सुखं च दुःखं चेच्छाद्वेषप्रयत्नगुरुताश्च ।
स्नेहस्तथा द्रवत्वं संस्कारश्शब्द एव चादृष्टम् ॥ ५०० ॥

एकैकवृत्तिमन्तो गुणा इमे सर्वसंमताश्च स्युः ।

षोडश संख्याश्चैते विशेषपूर्वा गुणा भवन्त्येव ।
नैमित्तिकं द्रवत्वं गुरुत्ववेगौ परत्वमपरत्वम् ॥ ५०३ ॥

संयोगश्च विभागः पृथक्त्वसंख्ये तथैव परिमाणम् ।
उक्ता एव दशैते भवन्ति सामान्यपूर्वका हि गुणाः ॥५०

संयोगश्च विभागः पृथक्त्वसंख्ये तथैव परिमाणम् ।
स्नेहस्तथा द्रवत्वं गुणा इमे त्विन्द्रियद्वयग्राह्याः ॥ ५०५

रूपं रसश्च गन्धः स्पर्शश्शब्दश्च बाह्यकैरक्षैः ।
एकैकतो गृहीतुं योग्याश्चाथो विशेषपूर्वगुणाः ॥ ५०६

त्रिभुवृत्तयश्च ये स्युः ते सर्वेऽतीन्द्रिया भवन्त्येव ।
कारणगुणैरजन्या भवन्ति चामी प्रकीर्तितास्तु गुणाः ॥

रूपादिस्पर्शान्ताः कारणगुणपूर्वका यथा जन्याः ।
बुध्यादयो न तादृग्विधाः स्युरात्मादिकारणाभावात् ॥

रूपादिस्पर्शान्ता अपाकजास्तु द्रवत्वमपि तादृक् ।
स्नेहश्च वेगसहिते चैकपृथक्त्वं तथैव परिमाणम् ॥ ५०

संयोगजसंयोगे कर्मजता नास्ति हीति चाव्याप्तिः ॥५

तदपि च कर्मजवृत्तिर्द्रव्यत्वव्याप्यतां च या भजते ।
तादृक्षजातिमत्त्वं चोक्तगुणानां सधर्मता भवति ॥ ५१

एवं समूहनीयं चान्यत्रापि स्थलेषु तत्र बुधैः ।
स्पर्शान्ते परिमाणे प्येकत्वपृथक्त्वयोश्च शब्दे च ॥ ५१

स्नेहेऽपि कारणत्वं चासमवायित्वमेव सुव्यक्तम् ।
रूपादिस्पर्शान्ताश्चोत्पद्यन्ते घटादिमद्रव्ये ॥ ५१४ ॥

तादृक्कपालवृत्तिस्पर्शान्तैस्तद्वदेव परिमाणे ।
स्याद्धेतुरसमवायी शब्देष्वपि पूर्वपूर्वशब्दश्च ॥ ५१५

एकपृथक्त्वेऽपि तथा तथा स्थितस्थापकेऽपि विज्ञेयम्
बुध्याद्यात्मगुणानां निमित्तहेतुत्वमेव चेच्छादौ ॥ ५१

उष्णस्पर्शगुरुत्वद्वयेऽपि वेगेऽपि च द्रवत्वे च ।
संयोगे च विभागे द्वितयेऽपि स्याद्द्विधैव हेतुत्वम् ॥ ५

पाकोत्पन्नस्पर्शे निमित्तहेतुमथवादिति स्पष्टम् ।
गुरुता स्याद्गुरुतायां पतनेऽप्याद्ये द्वितीयहेतुः स्यात् ॥

अभिघाते च निमित्तं स्यन्दनवेगद्वये तु वेगोऽपि ।
हेतुर्द्वितीय एव स्यादभिघाते निमित्तहेतुरपि ॥ ५२० ॥

द्रवतास्यन्दनयोः स्याद्द्रवत्वमेव द्वितीयहेतुश्च ।
स्यात्संग्रहे निमित्तं शब्दे दण्डस्य भेरिकायाश्च ॥ ५२१

संयोगस्तु निमित्तं भेर्याकाशद्वयस्य संयोगे ।
हेतुश्चासमवायी स्याद्वंशदलद्वये विभागस्तु ॥ ५२२ ॥

शब्दे निमित्तहेतुर्वंशदलाकाशयोर्विभागे च ।
स्यात्कारणं द्वितीयं चैषां तूक्तं द्विधैव हेतुत्वम् ॥ ५२३ ॥

अव्याप्यवृत्तयः स्युर्विशेषपूर्वा गुणा विभूनां च ।
संयोगश्च विभागः स्यातामव्याप्यवृत्तिकौ तौ द्वौ ॥ ५२४

चक्षुर्ग्रहस्य विषयो द्रव्याद्युपलंभकं भवेद्रूपम् ।
रूपत्वजातिमत्वं चक्षुर्ग्राह्यं हि रूपलक्ष्म स्यात् ॥ ५२५

नीलो वर्णः पीतो वर्णः शुक्लश्च रक्तवर्णोऽयम् ।
इत्यादिकप्रतीत्या सिद्धं वर्णत्वमेव रूपत्वात् ॥ ५२७ ॥

नान्यत्तथैव नीलत्वादिकमेवं हि लक्ष्म नीलादेः ।
न च नीलारुणरूपव्यक्तय एकैकरूपतापन्नाः ५२८ ॥

नीलत्वादि च तत्स्थं त्वेकाश्रयकं न जातिरिति वाच्यम् ।
नीलो नष्टो रक्तो जात इति प्रत्ययेन नीलादेः ॥ ५२९ ॥

उत्पादनाशशालित्वेन च नानात्वसिद्धिरिति युक्तम् ।
नो चेदकविनाशे जगदेव च नीलशून्यमेव स्यात् ॥

न च नीलरक्तरूपद्वयसमवायस्य चैव विषयत्वात् ।
उत्पादनाशविषयप्रत्यय इत्येव युक्तमिति वाच्यम् ॥५३१

न च सोऽयमेव नीलस्त्विति यत्प्रत्यक्षमेव तस्य बलात् ।
लाघवतोऽप्यैक्यं स्यादिति वाच्यं प्रत्यये तु विषयत्वात् ॥

तत्तज्जातीयानां सैवेयं गुर्जरीति यत्तद्वत् ।

एतेन विवृतमेव स्याच्च रसत्वादिकं तथाग्रेऽपि ।
द्रव्यगुणकर्मजातिप्रत्यक्षे चक्षुषा तु जननीये ॥ ५३५ ॥

उद्भूतरूपमेव स्याद्धेतुरनेकधा च शुक्लादि ।
शुक्लो नीलः पीतो रक्तो हरितश्च चित्रकपिशौ च ॥५३६

इति सप्तधा च रूपं ननु चित्रमिदं कथं भवेदन्यत् ।
इत्थं हि नीलपीताद्यवयवजन्यो भवेच्च योऽवयवी ॥५३७

न भवति स रूपशून्यः स्याद्रूपविहीन इन्द्रियाग्राह्यः ।
न व्याप्यवृत्तिरूपं नीलाद्युत्पद्यते तदिति वाच्यम् ॥

पीतावच्छेदेन स्यादुपलब्धिश्च नीलरूपादेः ।
अव्याप्यवृत्तिनीलादिकमपि नोत्पद्यते तथा वक्तुम् ॥

यद्व्याप्यवृत्तिकं स्यात्तज्जातीयस्य यद्विरुद्धं स्यात् ।
अव्याप्यवृत्तिता सा कथं भवेद्व्याप्यवृत्तिरूपादौ ॥ ५४०

तस्मान्नानारूपैरवयविनि स्याद्विलक्षणं चित्रम् ।

[illegible] निवृत्त एव [illegible] रसादिकं तु भेद भवेत् ।
अव्याप्यवृत्ति किंतु ह्यनेकरसवद्भिरेव चावयवैः ॥ ५४३ ॥

आरब्धे चावयविनि रसविरहेऽपि क्षतेर्विरहात् ।
रसनेन्द्रियेण तत्रावयवगतो गृह्यते रसो नान्यः ॥ ५४४ ॥

रसनेन्द्रियस्य शक्तिर्ग्रहणे द्रव्यस्य चैव नास्तीति ।
रसशून्योऽवयवी तु क्षतिलेशं नैव कारयितुमर्हः ॥ ५४५

नव्यास्तु तत्र नीलादिकमव्याप्यस्थितं हि नानैव ।
नीलादेः पीतादौ विरोधिता कल्प्यते न गौरवतः ॥ ५४६

अत एव लोहितोऽयं वक्त्रे पुच्छे तु पाण्डुवर्णोऽपि ।
खुरपादयोश्च शुक्लो नीलो वृष एक एव चेहास्ते ॥ ५४७

इत्यादिशास्त्रसिद्धं लोकानुभवश्च युज्यते नूनम् ।
व्याप्याव्याप्यस्थितयोः स्वसजातीयद्वयस्य न विरोधः ॥

मानस्य चाप्यभावान्न च लाघवतोऽपि चित्रमेकं स्यात् ।
[illegible] विरोधात् [illegible] ॥ ५४९

ग्राह्यो रसो रसनया मधुरादिरनेकधा भवत्येव ॥ ५५१

रसनाया: सहकारी पूर्ववदेवास्य नित्यतादि स्यात् ।
जलपरमाणौ तु रस: पाकाभावाच्च तत्र नित्य: स्यात् ॥

अन्य: सर्वोऽपि रस: सर्वत्रान्यत्र नित्यभिन्न: स्यात् ।
नासाग्राह्यो गन्धो नासायाश्चोपकारको भवति ॥ ५५३

सौरभमसौरभं च द्वेधा गन्ध: प्रकीर्तितोऽनुभवात् ।
सर्वोऽपि गन्ध एवानित्यो यत्पाकजोऽपि परमाणौ ॥५५

स्पर्शस्त्वगिन्द्रियेण ग्राह्यो भवति त्वचोऽपि सहकारी ।
त्रेधा भवेदनुष्णाशीतस्पर्शोष्णशीतभेदेन ॥ ५५५ ॥

स्पर्शोऽनुष्णाशीत: पृथिवीवायुद्वये जले शीतम् ।
उष्णस्तु तेजसि स्यात्काठिन्यादिर्भवेत्क्षितावेव ॥ ५५६

तत्स्पर्शवृत्तिजाति: कठिनत्वं नैव चाक्षुषापत्ते: ।
पूर्ववदेव च नित्यत्वादि परं तूदवायुतेजस्सु ॥ ५५७ ॥

रूपादिकपरिवृत्तिः पृष्ठ्यामुपलभ्यतेऽग्निसंयोगात् ॥

शतधाध्माते वारिणि नैव परावर्तते हि रूपादि ।
व्यतिरेकान्वयतः स्यादुपाधिजं सौरभं च वार्यौष्ण्यम्

निर्णीयते तथैव क्षितौ च वायौ भवेद्यथा शीतम् ।
क्षितिपरमाणावेव तु पाकं वैशेषिका वदन्त्येव ॥ ५६

तेषामाशय एवं त्ववयविनाशक्रमान्महावयवी ।
तेजोवेगातिशयादवयविसङ्घस्य नाशतो झटिति ॥ ५

अवयविसंघान्तरमपि पुनरेवोत्पद्यते तथैवेति ।
द्व्यणुकादेस्तु विनाशोपक्रमतः कतिपयैः क्षणैर्भवति

पुनरपि रूपादिकवद्योत्पत्त्येति क्षणप्रकारोऽपि ।
वैशद्याय च बुद्धेः शिष्याणां वाक्य एव मतभेदः ॥

यदि च विभागाद्य विभागस्तर्हि नव क्षणा भवन्त्येव
तस्याप्यङ्गीकारे किञ्चिदपेक्ष्यैव सोऽपि तं जनयेत्

वैशेषिकं च सूत्रं स्वोत्तरभावानपेक्षतास्यार्थः ।
नो चेत्कर्माप्युत्तरसंयोगे पूर्वदेशयोगस्य ॥ ५६७ ॥

नाशमपेक्ष्य च हेतुः स्यादित्यव्याप्तिरेव तत्र स्यात् ।
तत्र द्रव्यारंभकसंयोगविनाशकालसापेक्षः ॥ ५६८ ॥

यदि जायते विभागाद्विभाग एव क्षणा दश भवन्ति ।
द्रव्यविनाशविशिष्टं कालमपेक्ष्य च विभागजविभागः ॥

स्याद्यदि तदा भवन्ति क्षणास्तु चैकादशैव मतभेदात् ।
तत्र तु नव क्षणाः स्युर्यत्राग्निसंयोगतश्च परमाणौ ॥

कर्म ततः परमाणावन्यस्मिन्जायते विभागश्च ।
तत आरंभकसंयोगस्य विनाशस्ततो द्व्यणुकनाशः ॥

तत ऊर्ध्वं परमाणौ श्यामादिविनाशतश्च रक्तादि ।
उत्पद्यते ततश्च द्रव्यारंभानुकूलकर्मैव ॥ ५७२ ॥

तस्मात्परं विभागस्ततः परं पूर्वयोगविध्वंसः ।

परमाणौ द्रव्यस्यारंभाणुगुणाः कथमिति तु चेन्न ।
अग्नियुते परमाणौ यत्कर्मविनाशमन्तरा तस्य ॥ ५७५

उत्पत्तिमपि गुणानां विनैव कर्मान्तरस्य चाभावात् ।
कर्मवति चान्यकर्मानुत्पत्तेर्निर्गुणेऽपि च द्रव्ये ॥ ५७६

अन्यद्रव्यारंभककर्मानुपपत्तितश्च नोक्तं स्यात् ।
तदपि च परमाणावपि नीलनिवृत्तिक्षणेतु रक्तादि ॥

स्यादिति चेन्न हि तत्र प्राग्रूपविनाशकारणाभावात् ।
यत्रारंभकसंयोगविनाशविशिष्टकर्मसापेक्षम् ॥ ५७८ ॥

यदि जन्यते विभागो विभागतश्चेत्क्षणा दश भवन्ति
अग्नेः संयोगवशाद्द्व्यणुकस्यारंभके च परमाणौ ॥ ५७

कर्म ततश्च विभागः स्यादेवारंभकस्य योगस्य ।
नाशस्ततो भवेतां द्व्यणुकध्वंसकाविभागजविभागौ ॥

तस्मान्नीलविनाशः प्राक्संयोगस्य नाश इति च द्वौ ।
स्यातां ततश्च रक्तोत्तरसंयोगौ ततश्च परमाणौ ॥ ५

द्रव्यारंभानुगुणं ततो विभागस्ततश्च पूर्वस्य ।
संयोगस्य विनाशस्ततो हि चारंभकस्तु संयोगः ॥ ५८३

उत्पद्यते ततश्च द्व्यणुकं रक्तं ततश्च भवतीति ।
अथ चैकादश संख्याः क्षणा भवेयुश्च तत्र यत्राग्नेः ॥

संयोगात्परमाणौ कर्म ततः स्यात्ततो विभागश्च ।
स्याच्च ततो द्रव्यस्यारंभकसंयोगनाशतस्तत्र ॥ ५८५ ॥

द्व्यणुकस्य विनाशः स्यात्तस्माद्द्व्यणुकस्य नाशयुक्तं तम् ।
कालमपेक्ष्य भवेतां विभागजविभागनीलनाशौ द्वौ ॥५८

स्यातां ततश्च पूर्वकसंयोगविनाशरक्तरूपे द्वे ।
तत उत्तरस्य योगः स्याच्च ततो वह्निनोदनोत्पन्नम् ॥

यत्कर्म तस्य नाशात्संयोगेनात्मनो ह्यदृष्टवतः ।
द्रव्यारंभानुगुणं कर्म ततो जायते विभागश्च ॥ ५८८ ।

पूर्वकयोगविनाशस्ततस्ततश्चोत्तरस्य संयोगः ।
द्रव्यारंभक एव स्याच्च ततस्तत्र जायते द्व्यणुकम् ॥

किं च यदि नाशक: स्यादुत्पादकत्वं न तस्य रूपादौ

नष्टेऽग्नेश्च विनाशे स्यात्परमाणुश्चिरं हि नीरूप: ।
यद्युत्पादक एव स्यान्न विनाशेऽपि हेतुरेव तदा ॥

रक्तोत्पत्तौ सत्यां तदग्निनाशे न रक्ततरता स्यात् ।
एवं क्रमेण पाक: परमाणावेव नान्यतश्चेति ॥ ५९३

द्व्यणुकादावपि पाको नैयायिकानां मते भवत्येव ।
तेषामाशय एवं सूक्ष्मावयवत्वतश्च वन्ह्यादे: ॥ ५९४

सच्छिद्रावयवत्वाद्युगपत्प्रसृतै: स्वकीयशकलैश्च ।
आ परमाणोरा कलशं युगपत्पाकस्तु युक्त एवेति ॥५९

पाकात्प्रागपि दृष्टो य: स्यात्सोऽयं घटोऽद्य दृष्टोऽभूत
इति चानुभूतिरेषा युज्यत एवाद्य युक्तिबलतोऽपि ॥

व्यवहारे गणनाया हेतु: संख्याभिधीयते च बुधै: ।
एको द्वाविति लोकव्यवहारे हेतुरेव समभिन्न: ॥

कारणमवयववृत्ति स्यात्परमाणौ तथैव च द्व्यणुके ।
परमाणुगतद्वित्वं द्व्यणुकगतं त्रित्वमेव परिमाणे ॥ ६०७

कारणमिति वक्तव्यं नो चेत्त्रसरेणुगं तु परिमाणम् ।
अणुतरमेव तदा स्यान्महदारब्धं महत्तरं च यथा ॥६०८

परिमाणं स्वसजातिस्वोत्कृष्टे कारणं हि परिमाणे ।
प्रचय: शिथिलाख्यो य: संयोग: स्यात्ततश्च तूलादौ ॥

परिमाणं जायत इति तत्प्रत्यक्षं भवेदिति स्पष्टम् ।
आश्रयनाशान्नाश: परिमाणस्येति युक्तमिति बोध्यम् ॥

संख्यादिरिव पृथक्त्वं पृथगयमेवेति बुद्धिहेतु: स्यात् ।
पृथगिति नेति च बुद्धेर्भेदाद्भिन्नं पृथक्त्वमपि भेदात् ॥

प्रत्येकस्थितयो: स्यात्परस्परं योग एव संयोग: ।
अन्यतरकर्मजन्यो द्विकर्मजन्यश्च यस्तु संयोगात् ॥ ६१

जन्यश्चेति च तस्य त्रैविध्यं कीर्तितं भवेत्तत्र ।

द्विविधश्च कर्मजन्यः स्यादभिघातश्च नोदनं चेति ।
शब्दस्य हेतुराद्यः शब्दो हेतुर्द्वितीय इति भेदः ॥ ६१५ ॥

एतौ द्वौ च विभक्ताविति बुद्धेः कारणं विभागः स्यात् ।
संयोगवत्त्रिधा स्यादेकक्रियाजन्य एव चैकः स्यात् ॥ ६१६

अन्यो द्विकर्मजन्यो विभागजन्यो परस्त्विति च भेदात् ।
आद्यो गिरिभृगयोः स्यादिति पूर्ववदेव च द्वितीयोऽपि ॥

द्वेधा भवेत्तृतीयो जनकविभागेन केवलं जातः ।
जनकाजनकविभागाज्जन्यत एवापरस्त्विति च भेदात् ॥

आद्यो यथा कपाले यत्र क्रियया कपालयुगळस्य ।
विभागतो घटादेरारंभकयोगनाशजननं स्यात् ॥ ६१९ ॥

तत एव घटविनाशस्ततो विभागाच्च पूर्वतस्तस्मात् ।
क्रियया कपालकस्याकाशविभागस्ततो भवेदेव ॥ ३२० ॥

आकाशयोगनाशस्तत उत्तरदेशयोगजननं स्यात् ।

गात्रान्तरोर्विभागे व्यधिकरणत्वान्न हस्तकर्मापि ।
जनकं भवेच्छरीरे क्रिया तु नास्त्येव चावयविकर्म ॥६२

कार्यविभागो यः स्याज्जनकाजनकद्वयस्य च विभागात् ।
इत्यत एव विभागो गुणान्तरं स्याद्विभक्तबुद्धेश्च ॥ ६२४

अत एव योगनाशान्न चान्यथा सिद्धिमेति हि विभागः
परमेतदपरमेतन्मतिजनकं स्यात्परत्वमपरत्वम् ॥ ६२५ ॥

द्विविधमपि द्विविधं स्याद्दैशिकमेकं च कालिकं चेति ।
बहुलतरमूर्तयोगान्तरितत्वमतस्तु दैशिकपरत्वम ॥ ६२६

अल्पतरस्तन्मतेश्च स्याद्परत्वं च दैशिकं भवति ।
दैशिकमेतन्मूर्तेष्वेव भवेदन्यतो न कुत्रापि ॥ ६२७ ॥

जनकश्चासमवायी तयोर्भवेदाश्रये च दिग्योगः ।
सूर्यपरिस्पन्दाधिकमनुजो ज्येष्ठो भवेत्तदितरश्च ॥ ६२८

तदपेक्षया कनिष्ठस्त्विति कालिकमेव तद्द्वयं चेति ।

अथ चावशिष्ट एव प्रकारभेदोऽत्र कीर्त्यते सम्यक् ।
बुद्धिस्तु द्विविधा स्यादयथार्था सा तथैव च यथार्था ॥

तच्छून्ये तस्य मतिर्या सा त्वयथार्था भवेदिति स्पष्टम् ।
तस्याः प्रपञ्च एवं विपर्ययः संशयस्तथैव भवेत् ॥ ६३

यज्ज्ञाने तदभावः प्रकारतातो न भासते किंतु ।
तस्यैव तत्र भानं प्रकारतातस्तदेव चान्यः स्यात् ॥ ६३

आद्यो भवेच्छरीरेष्वात्मत्वमतिस्तथैव शंखादौ ।
पीतत्वादिमतिश्चेत्यादिकबुद्धिस्तथा भ्रमो हि भवेत् ॥

ज्ञानं यदेकधर्मिणि भावाभावप्रकारकं च स्यात् ।
स्थाणुर्वा पुरुषो वेत्यादिकबुद्धिः स संशयश्च स्यात् ॥

साधारणादिधर्मज्ञानं यत्संशये स हेतुः स्यात् ।
कोटिद्वयस्य साधारणधर्मः स्यात्स उच्चतरतादिः ॥ ६३६

तद्विषयकमेव भवेद्यज्ज्ञानं तच्च संशये हेतुः ।

यज्ज्ञानमप्रमा स्यात्तद्धेतुर्दोष एव नान्यः स्यात् ।
यच्च यथार्थज्ञानं तत्र च हेतुर्गुणो भवेदेव ॥ ६३९ ॥

व्यतिरेकान्वयतः स्याद्दोषस्य गुणस्य हेतुता सिद्धा ।
प्रत्यक्षे तु विशेषणविशेष्ययोः सन्निकर्ष एव गुणः ॥ ६४

पक्षे साध्यानुमितौ तत्र परामर्श एव हि गुणः स्यात् ।
शक्ये सादृश्यमतिस्तूपमितौ कारणं गुणो भवति ॥६४

शाब्दे च योग्यतायास्तात्पर्यस्याथवा प्रमा तु गुणः ।
ज्ञानं यद्भ्रमभिन्नं तच्च यथार्थं भवेद्यदि तदैव ॥ ६४२ ॥

यत्र च रजतं शुक्तिः स्यातां तत्रोभयं रजतमेव ।
इति तत्र रजतबुद्धीरजतांशेऽपि प्रमा भवेन्नैव ॥ ६४३ ॥

तद्वद्विशेष्यकं स्याद्यज्ज्ञानं तत्प्रकारकं च भवेत् ।
सैव प्रमेति वाच्यं तूक्तस्थले स प्रमैव रजतांशे ॥ ६४४

ननु च स्मृतेः प्रमात्वात्तत्करणं च प्रमाणमितरत्स्यात् ।
इति चेन्न तत्प्रमाणं यत्करणं स्याद्यथार्थकानुभवे ॥ ६४

ननु वृक्षे कपियोगज्ञानं तु स्याद्भ्रमः प्रमा चापि ।
प्रतियोगिव्यधिकरणो यः संयोगाद्यभाव एव स्यात् ॥

तद्वति संयोगमतिः स्याद्भ्रम इत्येव वक्तुमुचितं स्यात् ।
न च वृक्षे कपियोगाभावावच्छिन्न एव योगस्य ॥ ६४

ज्ञानमपि न भ्रमः स्यात्कपियोगस्यापि वृक्षवृत्तित्वात् ।
इति नैव वाच्यमेतद्यदवच्छेदेन यस्य चाभावः ॥ ६४९

तस्यावच्छेदेन प्रतियोगिज्ञानमेव सा भ्रान्तिः ।
लक्ष्याणामननुगमादननुगमो लक्षणस्य न हि दोषः ॥

---

## प्रामाण्यवादारंभः ॥

स्वत एव हि प्रमात्वं न ग्राह्यं संशयोदयादेव ।
मीमांसका वदन्ति स्वत एव हि गृह्यते प्रमात्वमिति ॥

तत्र गुरूणां हि मते ज्ञानस्य स्वप्रकाशरूपत्वात् ।

ज्ञानस्यानुमितिः स्यान्मते एव मुरारिपूर्वमिश्राणाम् ।
ज्ञानं गृह्यत एवानुव्यवसायेन सर्वमेवेति ॥ ६५४ ॥

विषयनिरूप्या हि मतिर्विषयोऽपि ज्ञानवित्तिवेद्य इति ।
मतमेतन्न हि युक्तं न स्वत एव प्रमात्वविज्ञानम् ॥ ६५५

ग्राह्यं स्वतो यदि तदाऽनभ्यासदशाहितं च यज्ज्ञानम् ।
तत्रानुभूतिसिद्धः प्रमात्वसंदेह एव नैव स्यात् ॥ ६५६ ॥

तत्र ज्ञानं ज्ञातं यदि च तदा त्वन्मते प्रमात्वमपि ।
ज्ञातं स्यादिति तत्र स्यान्न पुनः संशयः कथं तस्य ॥

ज्ञानं यदि न ज्ञातं धर्म्यज्ञानात्कथं च सन्देहः ।
तस्मात्प्रमात्वमेव स्यादनुमेयं च तत्प्रकारोऽयम् ॥ ६५८

हरिरयमिति यद्ज्ञानं तत्पक्षः स्तत्प्रमात्वमपि साध्यम् ।
संवादिनी प्रवृत्तिर्या स्यात्तस्याश्च हेतुता हेतुः ॥ ६५९ ॥

यन्नैवं तन्नैवं यथा भवेदप्रमा तथैवेदम् ।
एवमिदं पृथिवीत्वप्रकारकज्ञानमेव पक्षः स्यात् ॥ ६६०

हतामति: कथं स्यादिति चत्तस्य स्वतोगृहीतत्वात् ।
तत्र च गन्धग्रहणाद्गन्धस्याश्रयविशेष्यताग्रहणात् ॥६६२

तत्तत्प्रकारकत्वेनावच्छिन्ना विशेष्यिता तु परम् ।
गृह्येत नैव तन्त्रानुरोधत: संशयस्य सिद्धस्य ॥ ६६३ ॥

साध्यं च यत्प्रमात्वं तस्य तु सिद्धि: कथं च भवतीति ।
वाच्यं न च प्रमात्वं स्वत एव च गृह्यते तदा ज्ञाने ॥

तत्तत्प्रकारभेदात्प्रामाण्यं भिद्यते कथं तत्र ।
घटताप्रकारकत्वप्रसिद्धिरित्येव नो भवेद्वाच्यम् ॥ ६६५

घटताप्रकारकत्वं स्वविशेष्यकता स्वतश्च गृह्येत ।
पूर्वं घटस्य चोपस्थित्या ज्ञानं घटं विशेष्यतया ॥ ६६६

अवगाहते घटत्वं प्रकारभावेन तत्र नो बाध: ।
व्यवसाये च परं तु प्रामाण्यं नैव गृह्यते तत्र ॥ ६६७ ॥

संशयकारणसत्वे ह्युपपत्ते: संशयस्य च तदानीम् ।

इत्येव वक्तुमुचितं त्वनुरोधेनैव संशयस्यापि ।
अथ च प्रामाण्यस्यानुमितौ प्रामाण्यबुद्ध्यभावेन ॥ ६७

विषयकनिश्चयरूपत्वार्थं प्रामाण्यबुद्धिरपि तत्र ।
वाच्या साप्यनुमित्यन्तरतो वाच्येति चानवस्था स्यात् ।

इति चेन्न निश्चयत्वं तस्यैव च यत्र गृह्यते ज्ञाने ।
नैवाप्रामाण्यं स्याद्यत्र प्रामाण्यसंशयस्तत्र ॥ ६७२ ॥

प्रामाण्यस्यानुमितिस्त्वपेक्षिता यावदेव शङ्का स्यात् ।
सर्वत्र संशयो न क्वचिच्च कोट्यग्रहात्क्वचिच्चापि ॥ ६७

विषयान्तरग्रहाच्च क्वचिद्विशेषस्य दर्शनादेव ।
इत्यलमधिकविचारात्संक्षेपतश्चोक्तिरेव युक्ता स्यात् ॥

इति प्रामाण्यवादः ॥

---

ननु सर्वज्ञानानां याथार्थ्यादेव लक्षणे तूक्तम् ।

तत्र हि दोषाधीनो रजतभेदाग्रहस्य हेतुरिति ।
यत्र च सत्यं रजतं तत्रैव विशिष्टबुद्धिसत्त्वेन ॥ ६७७ ॥

हेतुर्भवेन्न सैव त्वथवा भेदाग्रहश्च तत्रापि ।
हेतुर्भवेदिति स्यान्न वान्यथाख्यातिसंभवस्तत्र ॥ ६७८ ॥

रजतस्य चाक्षुषे यो हेतुः स्याद्रजतसन्निकर्षो हि ।
तत्र च तस्याभावाद्रङ्गे रजतस्य नैव बुद्धिः स्यात् ॥

इति चेन्न सत्यरजतस्थले प्रवृत्तौ विशिष्टबुद्धेश्च ।
सिद्धैव हेतुतेति त्वन्यत्राप्येवमेव कल्प्या स्यात् ॥ ६८०

न च तत्र तच्च हेतुर्यत्र तु संवादिनी प्रवृत्तिः स्यात् ।
यत्र प्रवृत्तिरेव स्यान्न विसंवादिनी तु तत्रैव ॥ ६८१ ॥

हेतुरभेदाग्रह इति चेन्न वाक्यमेतत्प्रवृत्तिमात्रेऽपि ।
लाघवतो हेतुः स्यात्तदेव सर्वत्र युक्तमेवेति ॥ ६८२ ॥

इत्थं च या च रङ्गे रजतत्वविशिष्टधीस्तदनुरोधात् ।
या ज्ञानलक्षणा स्यात्तत्प्रत्यासत्तिकल्पनं न्याय्यम् ॥ ६८३

व्यभिचारानिश्चयस्याभावः सहचारनिश्चयश्च द्वौ ।
व्याप्तिग्रहे तु हेतू स्यातां तत्र कचिच्च तर्कोऽपि ॥ ६८

शङ्कानिवर्तकः स्याद्व्यभिचारस्य ग्रहो विरोधी स्यात् ।
व्याप्तिग्रहे च तस्याभावो हेतुर्भवेदिति च युक्तम् ॥ ६८

व्यतिरेकान्वयतः स्यात्सहचारज्ञानहेतुताऽत्र ।
भूयश्च दर्शनं वा दर्शनमपि भूयसां न हेतुः स्यात् ॥६

सकृदेव दर्शनेऽपि व्यभिचारस्याग्रहे मतिर्व्याप्तेः ।
भूयोदर्शनसत्त्वे व्यभिचारस्य ग्रहः कचित्स्याच्चेत् ॥ ६८

व्याप्तिग्रहश्च न भवेदिति तस्य स्यात्प्रयोजनं त्वेवम् ।
व्यभिचारसंशयस्य स्याच्च विधूननमुखात्कचिच्चैव ॥

भूयोदर्शनतः स्यात्तत्र च शङ्कानिवर्तनं नैव ।
तत्र च तर्कापेक्षा वह्निविरहेऽपि धूम एव स्यात् ॥ ६९

इति यदि भवति च शङ्का निवर्तते कार्यकारणत्वस्य ।

यदि कारणं विनापि स्यात्कार्यं तर्हि धूमजननार्थम् ।
वन्हेरनुसरणं वा तृप्त्यर्थं भोजनस्य वा न स्यात् ॥ ६९३

स्वत एव यत्र शङ्का नोदेति न तत्र तर्कसाहाय्यम् ।
साध्यव्यापकतावान्हेतोरव्यापकस्तथा यः स्यात् ॥

स भवेदुपाधिरिति चेच्छ्यामत्वं यत्र साध्यते हेतुः ।
मित्रायास्तनयत्वं तत्र भवेच्छाकपाकजत्वस्य ॥ ६९५ ॥

नोपाधितैव च तदा साध्यस्य व्यापकत्वविरहाच्च ।
साध्यस्य कोकिलादौ सत्त्वादुपाधेरसत्वतस्तत्र ॥ ६९६ ॥

प्रत्यक्षविषयभूतस्पर्शस्यैवाश्रयत्वतो वायुः ।
प्रत्यक्षविषयतावानित्यनुमानं हि यत्र तत्रापि ॥ ६९७ ॥

उद्भूतरूपवत्त्वं नैवोपाधिर्भवेत्तु तस्यैव ।
आत्मन्यसत्त्वतः स्यात्साध्यस्य व्यापकत्वमपि नैव ॥

एवं यत्र विनाशः पक्षः साध्यं विनाशितैव स्यात् ।
जन्यत्वमपि च हेतस्तत्र न भावत्वमप्युपाधिः स्यात् ॥

घटकं भवेन्न तेनैवावच्छिन्नस्य साधनस्यैव ।
अव्यापकत्वमेव प्रवेशनीयं ततो न दोषः स्यात् ॥ ७०

मित्रातनयत्वेनावच्छिन्ना श्यामता च या तस्याः ।
व्यापकतेव भवेत्तद्रूपावच्छिन्नसाधनस्यापि ॥ ७०२ ॥

अव्यापकतोपाधावसंशयं शाकपाकजत्वेपि ।
एवं हि पक्षधर्मश्चोदासीनो भवेन्न योऽधर्मः ॥ ७०३ ।

तत्तदवच्छिन्नं यत्साध्यं तद्व्यापकत्वमपि बोध्यम् ।
सर्वेऽप्युपाधयः स्युः साध्यसमाधारवृत्तिका एव ॥ ७०

एकाश्रये च हेतोः साध्यव्यभिचारिता भवेद्येषाम् ।
फलमपि भवेदुपाधेर्व्यभिचारस्यानुमानमेवेति ॥ ७०५

प्रत्यक्षमेकमेवं तथानुमानद्वयं भवेन्मानम् ।
शब्दस्तथोपमानं न पृथक्प्रामाण्यमर्हतीत्येव ॥ ७०६ ।

अनुमानतो गतार्थं द्वयमिति वैशेषिका वदन्त्यत्र ।

एतादृशाः पदार्थास्त्वितरे दृष्टान्ततां भजन्तीति ।
दृष्टान्तेष्वपि दृष्टान्तान्तरतः साध्यसिद्धिरिति च स्यात् ॥

गवयादिकपदमेवं निमित्तयुक्तं स्वकप्रवृत्तेश्च ।
साधुपदत्वादित्यनुमानेन च पक्षधर्मताबलतः ॥ ७१० ॥

गवयत्वादिस्वरूपप्रवृत्तिनिमित्तकत्वसिद्धिरिति ।
तत्र व्याप्तिज्ञानं विनापि शब्दस्य बोधतः शाब्दः ॥७११॥

बोधस्त्वनुभवसिद्धश्चेति पृथग्ज्ञानमेव शब्दः स्यात् ।
अनुमानं त्रिविधं स्याद्व्यतिरेकान्वययुतं तदेकं च ॥ ७१२ ।

अन्यतरमात्रयुक्तं द्वितयं चेति प्रदर्श्यते भेदः ।
व्याप्तिश्च द्विविधा स्यादन्वयपूर्वा तथैव चान्यापि ॥७१३॥

---

## व्यतिरेकव्याप्तिनिरूपणम् ॥

व्यतिरेकपूर्विका चेत्यन्वयपूर्वा निरूपितैव पुरा ।

आद्यस्तु यत्र पक्षो घटो भवेत्साध्यतेऽभिधेयत्वम् ।
हेतुः प्रमेयता स्यात्तत्र च हेतोर्विपक्षविरहाच्च ॥ ७१६

सर्वत्र साध्यसत्त्वादसद्विपक्षत्वरूपलक्ष्मैव ।
हेतौ वर्तत एव प्रमेयता केवलान्वयी हेतुः ॥ ७१७ ॥

यत्र च नैव सपक्षो व्यतिरेकव्याप्तिरेव तत्र स्यात् ।
यत्र च पृथिवी पक्षस्तत्रेतरभेदसाध्यके हेतौ ॥ ७१८ ।

गन्धे च तत्र नैव स्यात्तु सपक्षो धरा हि सर्वापि ।
पक्ष इति यत्र हेतुः साध्यं पक्षान्यतो न कुत्रापि ॥ ७१

यत्स्याच्च पक्षभिन्नं जलादिकं तत्र नैव गन्धः स्यात् ।
किंतु जलादिकमेव व्यतिरेकनिदर्शनं प्रसिद्धमिति ॥

यस्य सपक्षविपक्षौ स व्यतिरेकान्वयी भवेद्धेतुः ।
यत्र च वन्हिः साध्यो धूमो हेतुर्भवेच्च तत्रैव ॥ ७२१

स्यादपि महानसादिः सपक्ष एवं ह्रदो विपक्ष इति ।

प्रात्यक्षिकश्च सिद्धस्तस्य बहिः सत्वमेव निर्णयम् ।
अर्थापत्तित एव स्यादिति चेन्नानुमीयते तत्र ॥ ७२४ ॥

पक्षश्च देवदत्तस्तत्र बहिर्वर्तनं तु साध्यं स्यात् ।
भवनासत्त्वसमेता शतवत्सरजीविता च हेतुरिति ॥

सुखमेव सर्वकाम्यं तच्च पुनर्जन्यते हि धर्मेण ।
सर्वेषां प्रतिकूलं दुःखमधर्मेण जन्यमेव स्यात् ॥ ७२६ ॥

दुःखाभावे च सुखे जायत इच्छा परं हि तज्ज्ञानम् ।
इच्छापि द्विविधा स्यात्फलविषयैका ह्युपायविषया च ॥

फलमपि सुखं च दुःखाभाव इति स्याद्द्विधानुभूतिबलात् ।
तत्र फलेच्छां प्रति फलबुद्धिः स्यात्कारणं ततश्चैव ॥

पुरुषार्थः स्वत एव स्याच्च सुखं ह्यर्थ्यते जनैः सर्वैः ।
यद्ज्ञातमेव सत्तत्स्वकवृत्तितयेष्यते स पुरुषार्थः ॥ ७२९

इति तस्य लक्षणं स्यादितरेच्छाधीनतां व्रजेदिच्छा ।

उभयं च हेतुरेवत्यतश्चिकीर्षा तु नैव दृष्टा स्यात् ।
बलवद्द्विष्टमतिः स्यात्तत्र प्रतिबन्धिका भवेदेव ॥ ७३२

तदहेतुत्वमतिर्या सा हेतुः कस्य चिन्मते भवति ।
द्विष्टस्य साधनत्वज्ञानं द्वेषस्य कारणं भवति ॥ ७३३

यत्नस्त्रिधा प्रवृत्तिर्जीवनहेतुर्निवृत्तिरूपा च ।
आदौ भवेच्चिकीर्षाकृतिसाध्यत्वप्रकारकं ज्ञानम् ॥ ७३४

इष्टस्य साधनत्वप्रकारिका बुद्धिरत्र हेतुः स्यात् ।
एवमुपादानस्य प्रत्यक्षं चापि हेतुरेव स्यात् ॥ ७३५ ॥

त्रितयं प्रवृत्तिहेतुर्नो चेद्दोषश्च तत्र तत्र स्यात् ।
स्याच्च निवृत्तिर्द्विष्टे द्वेषो द्विष्टस्य साधनत्वधियः ॥ ७३

यत्नो जीवनयोनिस्त्वतीन्द्रियः सर्वदा भवेदेव ।
प्राणानां च शरीरे सञ्चारे हेतुतां भजेदेव ॥ ८३७ ॥

यदतीन्द्रियं गुरुत्वं तच्च पृथिव्यां जलेऽपि च द्वितये ।
नित्ये च नित्यमेवं स्यादनित्येऽप्यनित्यमेव स्यात् ॥

सांसिद्धिकं तु सलिले नैमित्तिकं भूमितेजसोरुभयोः ।
नित्यं जलपरमाणावन्यत्रानित्यमेव तच्च जले ॥ ७४० ॥

नैमित्तिकं तु योगादग्नेः स्वर्णादिके घृतादौ च ।
आद्यः स्यन्दनहेतुः स्यात्संग्रहे कारणं निमित्तमपि ॥

स्नेहो जले स नित्यो नित्ये चानित्य एव सोऽनित्ये ।
तैलान्तरे प्रकर्षाद्दहनस्यैवानुकूलता तस्य ॥ ७४२ ॥

संस्कारस्त्रिविधः स्यात्स्थितपूर्वस्थापकश्च वेगश्च ।
एवं हि भावनाख्यः स्थितस्य स्थापकः क्षितावेव ॥ ७४३ ।

केचिच्चतुर्षु स स्यादित्याहुस्तत्र निर्भरो नैव ।
आकृष्टापि च शाखा पुनरपि तत्रेति सा परित्यक्ता ॥७४४॥

तस्यैवागमने च स्थितस्य स्थापकस्तु हेतुः स्यात् ।
मूर्तेष्वेव तु वेगः कर्मज एवं हि वेगजन्योऽपि ॥ ७४५ ॥

तत्र क्वचित्तथा स्याद्यत्राङ्गे नोदनाच्च जन्येन ।

तत्रापेक्षानात्मिकानिश्चय एव स्फुटो भवेद्धेतुः ।
प्रत्यभिपूर्वज्ञाने स्मरणेपि तथा भवेदयं हेतुः ॥ ७४८ ॥

कालान्तरेऽप्यनुभवात्कालान्तरे या स्मृतिर्भवेत्तस्याम् ।
व्यापारेण विना स्याद्धेतुत्वं वा कथं त्वनुभवस्य ॥ ७४९ ॥

तस्माद्व्यापारस्यावश्यंभावे तु भावनैव तथा ।
यदि संस्कारो हेतुः प्रत्यभिपूर्वकमतौ तथैव तदा ॥ ७५० ॥

तस्यापि स्मरणत्वं स्यादिति वाच्यं तदिन्द्रियस्यापि ।
बाह्यस्यैव च साक्षाज्जायत एवेति तद्विभिन्नं स्यात् ॥७५१॥

केचिद्वदन्ति चैवं ह्युद्बुद्धसंस्कार एव हेतुः स्यात् ।
तदपेक्षया च तत्तत्स्मृतिरेव भवेच्च तत्र हेतुरिति ॥ ७५२ ॥

धर्माधर्मौ च भवेददृष्टमेव द्विधापि धर्मश्च ।
स्वर्गादिसाधनं स्याद्गङ्गास्नानादिकश्च यागादिः ॥ ७५३ ॥

तेषां तु व्यापारो धर्मश्चावश्यको भवेद्वाच्यः ।
यागादेस्तु विनाशात्स्वर्गादेरन्यकालसाध्यत्वात् ॥ ७५४ ॥

प्रायश्चित्तविनाश्यस्त्वित जीवेषु विद्यमानगुणाः ॥ ७५६

ननु तत्त्वज्ञानमिदं स्याद्धर्माधर्मनाशकं च कथम् ।
नाभुक्तं क्षीयत इति वचनविरोधो भवेदिति च चेन्न ॥

भोगस्य वेदबोधितनाशककर्मोपलक्षकत्वं स्यात् ।
कथमन्यथा तु शास्त्रं प्रायश्चित्तेन पापनाश इति ॥ ७५८

बोधयति ज्ञानाग्निर्भस्मानि करोति सर्वकर्माणि ।
किं च श्रुतिरपि वदति क्षीयन्ते चास्य सर्वकर्माणि ॥

ननु तत्वज्ञानवतः कथं शरीरस्थितिः सुखादिः स्यात् ।
तत्वज्ञानेनैव च सर्वेषां कर्मणां विनष्टत्वात् ॥ ७६० ॥

इति चेन्न कर्मनाशः प्रारब्धविभिन्नकर्मनाशपरः ।
तत्तच्छरीरभोगे जनकं प्रारब्धकर्म चेति स्यात् ॥

शब्दोऽपि द्विविधः स्यात् ध्वनिरूपो वर्णरूप इति भेदात्
आद्यो भवेन्मृदङ्गादिभजन्यः कण्ठतालुसंयोगात् ॥ ७६२

उत्पद्यन्ते श्रोत्रे गृह्यन्ते वा कथं च तेनैव ।
इति चेन्न पूर्वपूर्वैः शब्दैर्जायन्त एव चान्येऽपि ॥ ७६

पुनरपि तेभ्यश्चान्ये तेभ्यः पुनरेव चेतरेऽपि स्युः ।
वीचीतरंगनीत्या शब्दानां जायते परंपरिका ॥ ७६६

एवं क्रमेण कर्णप्रदेशजन्मान एव गृह्यन्ते ।
उत्पत्तिमपि च केचिद्वदन्ति नीत्या कदम्बमुकुलानाम्

शब्दानां नित्यत्वं प्रत्यक्षविरोधतो न वक्तव्यम् ।
उत्पन्नश्च ककारो नष्टश्चाभूत्ककार इति बुद्धेः ॥ ७६

सोऽयं गकार एव प्रत्यभिपूर्वकमतेर्न नित्यत्वम् ।
उक्ता तु बुद्धिरेषा साजात्यमेवावलंबते हि तथा ॥ ७
इदमौषधं तदेव स्यादिति बुद्धिर्यथैव साजात्यम् ।

---

इति तर्कपद्यरत्नावलिरेषा हृद्यपद्यगुणगुम्भा ।
बालककण्ठविभूषा विदुषां तोषाय चार्कमिह जीयात्

इति गुणपरिच्छेदः ॥

श्रीमद्वेङ्कटनाथसूरितनयेनास्थानसंख्यावता ।
श्रीमच्छ्रीनिधिदेशिकेन्द्रकरुणालब्धात्मसत्तावता
जीयात्सुन्दरनामकेन रचिता रत्नावलीयं चिरात् ॥

श्रीनाथयामुनयतीन्द्रमुनित्रयादि-
सत्संप्रदायपरिशोधितशिष्यवर्गः ।
जीवातुराश्रितवतामिह चापरत्र
जीयाद्दयाम्बुधिरमानिधिदेशिकेन्द्रः ॥

